अथ

# नित्यानुष्ठानकर्मप्रयोगपद्धतिः

प्रारम्भः ।

श्रीः ॥

# सूक्ष्म—
# नित्यानुष्ठानकर्मप्रयोगपद्धतिः

जिसमें

शान्तिपाठ वरणविधि गणपति षडक्षर शिवषडक्षर मृत्युञ्जय महामृत्युञ्जय चन्द्रशेखराष्टक भैरवशतनाम नवग्रहमन्त्र-न्यास और देव्याआरती आदि प्रयोग हैं।

जिसको

सहस्र अवदीच्यान्तर्गत ज्ञाति गौलवाल गौतमगोत्र गौतम औतम औतिथ्येति त्रिप्रवर शुक्लयजुर्वेदस्य माध्यंदिनशाखाध्यायी नाथुरामात्मज धनलालशर्म्मा ने

लक्ष्मीनारायण यन्त्रालय मुरादाबाद में
छपाकर प्रकाशित किया.

द्वितीयवार १०००, विक्रम स० १९७९

Printed by Kailasachandra
at the Lakshmi Narayan Press, Moradabad.

। श्रीः ।

## ❋ निवेदन ❋

इस मेदपाट देश में सूर्यवंशी राज्य चला आरहा है और वर्त्तमान् में श्रीमान् महाराजाधिराज श्री १०८ श्रीफतहसिंह जी व युवराज कुमार श्री १०५ श्रीभूपालसिंहजी की शुभचिन्तकों में कई ब्राह्मणदेव जपानुष्ठान कर्म करने को नियत रहते हैं सो उन ब्राह्मणों को इन कर्मों की परीक्षा देनी पड़ती है, इसलिये उनके लाभार्थ इस पुस्तक को प्रकट करने का विचार किया है। सो इस पुस्तक में कोई त्रुटि हो तो उसको विद्वज्जन क्षमाकर उत्तम सार को ग्रहण करेंगे। इति.

आपका शुभचिन्तक—

द्विवेदी नाथुरामात्मज घनलाल शर्मा

पता—रायजी की ब्रह्मपुरी–धनेश्वर पुस्तकालय

द्विवेदी नाथुरामात्मज घनलाल शर्मा, उदयपुर-मेवाड़

॥ श्रीगणेशाय नमः ॥

॥ श्रीसरस्वत्यै नमः । श्रीगुरुचरणकमलेभ्यो नमः ॥

# नित्यानुष्ठानकर्मप्रयोगपद्धतिः

सिन्दूरारुणगण्डमण्डलगलद्दानाम्भसां धारया ।
सिञ्चन्तं पदसक्तभक्तजनताविघ्नौघधूलीरिव ॥
धम्मिल्लालिभिवालिवृन्दमनिशं मूर्ध्ना दधानं हर
प्रेयांसं गिरिजाङ्गजं गजमुखं वन्देऽरविन्देक्षणम् ॥१॥

नि०

॥२॥ दधानं भृङ्गालीरनिशममले गंडयुगले । ग०पा०

ददानं सर्वार्थान्निजचरणसेवासुकृतिने ॥

दयाधारं सारं सकलनिगमानामपि परम् ।

गजास्यं स्मेरास्यं तमिह कलये चित्तनिलये ॥ २ ॥

जयति वरदमूर्तिर्मंगलं मंगलानाम् ।

जयति सकलवंद्या भारती ब्रह्मरूपा ॥

जयति भुवनमाता चिन्मयी मोक्षरूपा ।

दिशतु मम महेशो वाङ्मयः शब्दरूपम् ॥ ३ ॥ ॥२।

इति मङ्गलोच्चारणम् ।

---

## शान्तिपाठः प्रारंभः ।

गणनाथसरस्वतीरविशुक्रबृहस्पतीन् ।

पंचैतान् संस्मरन्नित्यं वेदवाणी प्रवर्त्तते ॥ १ ॥

ॐ आनो भद्राः क्रतवो यंतु विश्वतो दब्धासोऽ
अपरीता सऽउद्भिदः ॥ देवानो यथा सदमिद्वृधेऽ
असन्नप्रायुवो रक्षितारो दिवे दिवे ॥१॥ देवानं ।
भद्रा सुमतिर्ऋजूयतान्देवानां ँ रातिरभिनो
निवर्त्तताम् ॥ देवानां ँ सख्यमुपसेदिमा वयन्दे
वानऽ आयुः प्रतिरं तु जीवसे ॥ २ ॥ तान्पूर्व्वया-
निविदाहूमहे वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥

१०५०

अर्य्यमणं व्वरुणं ठे सा मंमश्विना सरस्वतीनः
॥३॥ सुभगामयस्करत् ॥ ३ ॥ तन्नोव्वातो मयो भुवा
तु भेषजन्तन्माता पृथिवी तत्पिताद्यौः ॥ तद्ग्रा-
वाणः सोमसुतो मयो भुवस्तदश्विना शृणुतन्धि-
ष्णया युवम् ॥४॥ तमीशानञ्जगतस्तस्थुषस्पति-
न्धियं जिन्वमवसे हूमहे व्वयम्॥पूषानो यथाव्वेदसा-
मसद्वृधे रक्षितापायुरदब्धः स्वस्तये ॥५॥ स्व-
स्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा व्विश्ववे-
दाः ॥स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो
... र्द्दधातु ॥६॥ पृषदश्वा मरुतः पृश्निमातरः ॥३॥

शुभं यावानो व्विदथेषु जग्मयः ॥ अग्नि जिह्वा
मनवः सूरचक्षसो व्विश्वेनो देवाऽअवसागमन्निह ७
भद्रं कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्य्य-
जत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिर्व्यशे
महिदेवहितं यदायुः ॥ ८ ॥ शतमिन्नु शरदोऽ-
अन्तिदेवा यत्रा नश्चक्रा जरसन्तनूनाम् ॥ पुत्रासो
यत्र पितरो भवन्तिमानो मध्यारीरिषतायुर्गन्तोः ९
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता सपिता स-
पुत्रः ॥ व्विश्वेदेवाऽअदितिः पञ्चजनाऽअदिति-
र्ज्जातमदितिर्ज्जनित्वम् ॥१०॥दीर्घायुत्वाय बलाय

वर्च्चसे सुप्रजास्त्वाय सहसा अथो जीव शरदः
शतम् ॥ ११॥ द्यौः शान्तिरन्तरिक्ष छं शान्तिः
पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः वन-
स्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः
सर्व्व छं शान्तिः शान्तिरेव शान्तिः सामा शान्ति
रेधि ॥ १२शान्तिः शान्तिः शान्तिः शुभशान्तिर्भवतु॥

## अथ मन्त्रोपासनविधिः ।

ब्राह्म मुहूर्ते उत्थाय शौचविधानं कृत्वा दन्तधाव-
नान्तं प्रातः स्नानादि नित्यकर्म कृत्वा, शुभासने



उपविश्य भस्मधारणं रुद्राक्षमालाधारणं, कुशपवि-
त्रधारणं भूतशुद्धिं प्राणप्रतिष्ठां च कृत्वा संध्यामुपा-
स्य देवयज्ञब्रह्मयज्ञादिकं कृत्वा तदनन्तरं दानखंडो-
क्तपुण्याहवचनं कृत्वा अमुकदेवप्रसन्नतार्थं वा प्री-
त्यर्थं अमुकमन्त्रं उपास्य।

## यत्रादौ सूक्ष्मवरणविधिः ।

शुभासने यजमानः पूर्वाभिमुख उपविशेत् ब्राह्मण
उदङ्मुख आसने उपविशेत् ॥ यजमान आचमनं
प्राणायामं गणपतिस्मरणं कुर्यात् ब्राह्मणो यजमान-

...तिलकंकृत्वा, अक्षतवन्दनं, हस्तेमांगलयसूत्रबन्धनञ्च कुर्यात् पश्चात् यजमानो ब्राह्मणवरणमारभेत्।
ॐ स्वस्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु॥१॥ इति तिलकम्॥ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत॥अस्तोषत स्वभानवो विप्रा नविष्ठ्यामतीयो जान्विन्द्रते हरी ॥१॥ अक्षतवन्दनम् ॥ यदाबध्नन्दाक्षायणा हिरण्य छं शतानीकाय सुमनस्यमानाः ॥ तन्मऽआबध्नामि शतशा रदायायुष्माञ्जरदष्टिर्यथासम् ॥ १ ॥



इतिमंत्रेण हस्ते मांगल्यसूत्रबन्धनम् कुर्यात्। गोत्रप्रवरोच्चारणम् । अमुकगोत्रं अमुकप्रवरं अमुकवेदस्य अमुकिशाखाध्यायिन अमुकशर्माणं ब्राह्मणं अमुकमंत्रजपाख्ये कर्मणि त्वामहं वृणे इति यजमानो ब्रूयात्वृतोऽस्मीति प्रतिवचनं-यथाविहितं कर्म कुरु इति यजमानः-ॐकरवाणीति प्रतिवचनम्।

## उदाहरण ।

गौतमगोत्रं गौतमअङ्गिरस औतिथ्येति त्रिप्रवरं शुक्लयजुर्वेदस्य माध्यन्दिनीशाखाध्यायिनं धनेश्वरशर्माणं ब्राह्मणं-षडक्षर गणपतिमंत्रजपाख्ये

णि त्वामहं वृणे-वृतोऽस्मि-यथाविहितं कर्म कुरु ॐकरवाणीति। 

आसनशुद्धिः।

कुशोदकेन भूमौ प्रोक्षणम्-ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम्॥ १॥ धृत्वा पवित्रं संप्रोक्ष्य जपस्थानं कुशोदकैः॥ आधारादीन् नमस्कृत्य कुशाग्रैरासनं ततः॥२॥बध्वा पद्मासनं वापि स्वस्तिकं वा यथा सुखम्। ॐ भूर्भुवः स्वरोमिति जपित्वासनमुपविशेत्॥ 

अथ पवित्रकरणम्।

ओं अपवित्रःपवित्रो वा सर्वावस्थांगतोऽपि वा॥ यःस्मरेत् पुण्डरीकाक्षं सवाह्याभ्यन्तरः शुचिः॥१॥

आचमनम्-ओंअच्युताय नमः॥ ओं अनन्ताय नमः॥ ओं गोविन्दाय नमः॥ इति.

प्राणायामः-ओंभूःओंभुवःओंस्वःओंमहःओंजनः ओंतपःओंसत्यम् ओंतत्सवितु० ओं आपो ज्योती रसोऽमृतं ब्रह्मभूर्भुवः स्वरोम्॥१॥ इति मंत्रेण वारत्रयं प्राणायामं कुर्यात्॥

श्रीमन्महागणाधिपतये नमः।

ओं सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः। लम्बोदरश्च विकटो विघ्ननाशो विनायकः॥धूम्रकेतु गणाध्यक्षो भालचन्द्रो गजाननः। द्वादशैतानि नामानि यः पठेच्छृणुयादपि॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा। संग्रामे संकटे चैव विघ्नस्तस्य न जायते॥शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम्। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये॥ अभी-प्सितार्थसिध्यर्थं पूजितो यः सुरासुरैः। सर्वविघ्न-हरस्तस्मै गणाधिपतये नमः॥ सर्वमंगलमांगल्ये



शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारा-यणि नमोऽस्तुते॥सर्वदा सर्वकार्येषु नाऽस्ति तेषाममं गलम्। येषां हृदिस्थो भगवान् मंगलायतनं हरिः॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव। विद्याबलं दैवबलं तदेव लक्ष्मीपते तेंऽघ्रियुगं स्मरामि॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः। येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्द्धरः॥तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥ सर्वेष्वारंभकार्येषु त्रयस्त्रि-भुवनेश्वराः। देवा दिशन्तु नः सिद्धिं ब्रह्मेशान-

…ादनाः ॥ विनायकं गुरुं भानुं ब्रह्मविष्णु-
महेश्वरान् ।सरस्वतीं प्रणम्यादौ सर्वकार्यार्थसिद्धये॥
वाणीहिरण्यगर्भाभ्यां नमः॥श्रीलक्ष्मीनारायणाभ्यां
नमः ॥ उमामहेश्वराभ्यां नमः ॥ शचीपुरन्दराभ्यां
नमः ॥ इष्टदेवताभ्यो नमः॥ कुलदेवताभ्यो नमः ॥
मातृपितृचरणकमलाभ्यां नमः ॥ सर्वेभ्यो देवेभ्यो
नमः ॥ सर्वेभ्यो ब्राह्मणेभ्यो नमः ॥ निर्विघ्नमस्तु ॥

संकल्पः-हस्ते जलं गृहीत्वा ओं विष्णुर्विष्णुर्विष्णुः
श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्त-
मानस्य अद्य श्रीब्रह्मणो द्वितीयप्रहरार्धे तदादौ
श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे अष्टा-
विंशतितमे कलियुगे कलिप्रथमचरणे भूर्लोके भरत-
खण्डे जम्बूद्वीपे मेदपाटदेशे नैमिषारण्ये आर्याव-
र्त्तान्तर्गते ब्रह्मावर्त्तैकदेशे कुमारिकानाम्नि क्षेत्रे
श्रीमहानद्योःगंगायमुनयोःपश्चिमे तटे रेवाया उत्तरे
तटे गोदावर्याः दक्षिणे तटे बौद्धावतारे रामराज्ये
श्रीमन्नृपति विक्रमादित्यराज्यसमयात् सम्वत्सरे
संवत् अष्टसप्तत्याधिकैकोनविंशतिशततमे वर्षे श्री-
मत् शालिवाहनकृत शाके त्रिचत्वारिंशदाधिकाष्टाद-
शशततमे वर्षे अमुकनाम्नि संवत्सरे अमुकायने

गत श्रीसूर्ये अमुक-ऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे एवं ग्रहगुणविशेषण विशिष्टायां शुभपुण्यतिथौ ममाऽऽत्मनः श्रुतिस्मृति-पुराणोक्तपुण्यफलप्राप्त्यर्थं मम शरीरे आधिव्या-ध्यादिसमस्तानिष्टनिरसनपूर्वकायुरारोग्यैश्वर्यादि-भिर्वृद्ध्यर्थं अमुक देवता प्रसन्नार्थं यथासंख्य-कममुकमंत्रजपं अमुकगोत्रोत्पन्नः अमुकशर्माहं करिष्ये ॥ १ ॥ इति संकल्पः ॥

टिप्पणी· मम यजमानस्य अमुकगोत्रोत्पन्नस्य अमुकशर्मणः = ब्राह्मण शर्मा, क्षत्रिय वर्मा, वैश्य गुप्त, शूद्र दास ॥ अयन २ उत्तरायण दक्षिणायन। ऋतौ, ६ वसन्त, ग्रीष्म वर्षा, शरद, हेमन्त, शिशिर। मास १२ चैत्र आदि। पक्ष २ कृष्णपक्ष, और शुक्लपक्ष। वार ७ रवि आदि इति।



अथ षडक्षरमंत्रजपविधिः।

ॐ अस्य श्रीषडक्षरगणपतिमंत्रस्य भार्गव-ऋषिःअनुष्टुप्छन्दः विघ्नेशो देवता वं बीजं यं शक्तिः हुं कीलकं मम श्रीगणपतिप्रसादसिद्ध्यर्थे जपे वि-नियोगः ॥ अथ ऋष्यादिन्यासः ॥ भार्गवऋषये नमः शिरसि ॥ अनुष्टुप्छन्दसे नमःमुखे॥ विघ्नेशो देवतायै नमः हृदये ॥ वं बीजाय नमःगुह्ये ॥ यं शक्तये नमः पादयोः॥ हूं कीलकाय नमः सर्वांगे ॥ अथ करन्यासः ॥ वं अंगुष्ठाभ्यांनमः ॥ क्रं तर्जनी-भ्यां नमः ॥ तुं मध्यमाभ्यां नमः ॥ डां अनामि-

काभ्यां नमः ॥ यं कनिष्ठिकाभ्यां नमः ॥ हुं करतलकर-
पृष्ठाभ्यां नमः ॥ एवं हृदयादि ॥ वं हृदयाय नमः ॥ क्रं
शिरसे स्वाहा ॥ तुं शिखायै वषट् ॥ डां कवचायहुं ॥
यं नेत्रत्रयाय वौषट् ॥ हुं अस्त्रायफट् ॥ वं नमः भ्रुवो-
र्मध्ये ॥ क्रं नमः कंठे ॥ तुं नमः हृदये ॥ डां नमः नाभौ ॥
यं नमः लिंगे ॥ हुं नमः पादयोः ॥ मूलेन त्रिवारं व्या-
पकम् ॥ अथ ध्यानम् ॥ उद्यद्दिनेश्वररुचिन्निजहस्त-
पद्मैः पाशांकुशाभयवरान् दधतं गजास्यम् । रक्ता-
म्बरं सकलदुःखहरं गणेशं ध्यायेत्प्रसन्नमखिला-



भरणाभिरामम् ॥ १ ॥ इति ध्यात्वा मानसोपचारैः
सम्पूज्य ॥ लं पृथिव्यात्मकं गन्धं समर्पयामि ॥ हं
आकाशात्मकं पुष्पं० ॥ यं वाय्वात्मकं धूपं ० ॥
रं वह्न्यात्मकं दीपं ॥ वं अमृतात्मकं नैवेद्यं स० ॥ शं
शक्त्यात्मकं ताम्बूलं० ॥ सं सर्वात्मकं मंत्रपुष्पं
स० ॥ छत्रं चामरं पादुकां दर्पणं व्यजनं सांगाय
सायुधाय सपरिवाराय समुद्रसहिताय श्रीमहागण
पतये नमः मानसोपचारपूजां परिकल्पयामि प्रीयतां
नमम० ॥ मूलमंत्रः ॐवक्रतुंडायहुं ॥
(जपकाले मालाग्रहणविसर्जनप्रकारः) । ततो

अथ शिवषडक्षर मन्त्र जपविधिः ।

ओं अस्य श्रीशिवषडक्षरमंत्रस्य वामदेवऋषिः पंक्तिश्छन्दः श्रीसाम्बसदा शिवा देवता ह्रां बीजं ह्रीं शक्तिः ह्रूं कीलकं मम अभीष्टसिद्ध्यर्थे जप विनियोगः ॥ ऋष्यादिन्यासः॥ वामदेवऋषये नमः शिरसि॥ पंक्तिश्छंदसे नमः मुखे॥ श्रीसाम्बसदा शिवदेवतायै नमः हृदये॥ह्रां बीजाय नमःनाभौ॥ह्रीं शक्तये नमः पादयोः॥ ह्रूं कीलकाय नमःसर्वांगे ॥ अथकरन्यासः॥ ओं ओं अंगुष्ठा० ॥ ओं नं तर्जनी० ॥ ओं मं मध्यमा०॥ ओं शिं अनामिका० ॥ ओं वां




कनिष्ठिका०॥ ओं यं करतल० ॥ एवं हृदयादिन्यासः॥ओं ओं हृदयाय०॥०ओं नं शिरसे० । ओं मं शिखायै० ॥ ओं शिं कवचा०॥ओं वां नेत्रत्र०॥ ओ यं अस्त्राय०॥अथ ध्यानम्॥ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसम्। रत्नाकल्पोज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानम्। विश्वाद्यं विश्ववंद्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम् ॥ १॥ इति ध्यात्वा मानसोपचारैः सम्पूज्य पूर्ववत्. माला पूजनं पूर्ववत् ॥ शिवषडक्षरमन्त्रः(ओंनमःशिवाय)

 

जपान्ते पुनःन्यासं,ध्यानं प्रार्थना, क्षमापनम्,
अर्पणम् । अनेन यथासंख्यककृत शिवषडक्षरमन्त्र-
जपेन श्रीसाम्बसदा शिवः प्रीयताम् ॥

अथ त्र्यक्षरमृत्युंजयमन्त्रजपविधिः ।

ओं अस्य श्रीत्र्यक्षरमृत्युञ्जयमन्त्रस्य कहोलऋषिः
प्रकृतिश्छन्दः श्रीमृत्युञ्जयोदेवता ओं बीजं जूं शक्तिः
सःकीलकं ममशरीरे सकलरोगाऽपमृत्युनिवृत्त्यादीनां
निवृत्त्या शरीरारोग्यदीर्घायुष्यार्थं श्रीसाम्बसदाशिव
प्रसन्नार्थं त्र्यक्षरमृत्युंजयमन्त्रजपे विनियोगः॥ अथ

 

ऋष्यादिन्यासः ॥ कहोलऋषये नमः शिरसि ॥
प्रकृतिश्छंदसे नमः मुखे ॥ श्रीमृत्युंजयदेवतायै नमः
हृदये॥ ॐ बीजाय नमः नाभौ॥जूं शक्तये नमः पादयोः॥
सः कीलकाय नमः सर्वांगे ॥ अथ करन्यासः ॥ सां
अंगुष्ठा०॥सीं तर्जनी०॥ सूं मध्यमा० ॥ सैं अना-
मिका०॥ सौं कनिष्ठिका०॥ सः करतल० ॥ एवं
हृदयादिन्यासः॥ अथ ध्यानम्॥ चंद्रार्काग्निविलो-
चनं स्मितमुखं पद्मद्वयान्तःस्थितम्॥मुद्रापाशमृगाक्ष-
सूत्रविलसत्पाणिं हिमांशुप्रभम् ॥ कोटीचन्द्रगल-
त्सुधाप्लुतयुतं हारादिभूषोज्ज्वलम्। कांत्या विश्ववि-

माहनं पशुपतिं मृत्युंजयं भावयेत् ॥१॥ इति ध्यात्वा
मानसोपचारैःसंपूज्य, लं पृथिव्या० मालापूजनं
पूर्ववत् मूलमंत्रं जपेत्॥ ॐ जूं सः जपान्ते माला-
विसर्जनं पूर्ववत् ॥ पुनः न्यासं ध्यानं ततो
जपानन्तरं देवदक्षिणकरे जपं समर्पयेत् ॥ प्रार्थना ॥
मृत्युंजय महादेव त्राहि मां शरणागतम् ॥ जन्म-
मृत्युजरारोगैः पीडितं कर्मबन्धनैः॥१॥तावकस्त्वद्गत
प्राणस्त्वच्चित्तो हंसदा मृड ॥ इति विज्ञाप्य देवेशं
जपेन्मृत्युंजयं मनुम्॥२॥ इति प्रार्थना अर्पणम्॥अनेन
यथासंख्यक त्र्यक्षरमृत्युंजयमन्त्रजपाख्येन कर्मणा श्री-

॥१४॥

साम्बसदाशिवः प्रीयताम् ॥ अस्य पुरश्चरणं
लक्षत्रयजपः कलौ चतुर्गुणम् ॥

इति शारदोक्तमृत्युंजयविधिः ।

## अथ शारदोक्त महामृत्युंजयविधिः ।

आचमनं प्राणायामं गणपतिस्मरणम्॥ संकल्पः-
पुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्त-
पुण्यफलप्राप्त्यर्थं मम वा यजमानस्य शरीरे सर्वा-
रिष्टनिवृत्त्यर्थं सकलमनोरथसिद्ध्यर्थं सद्यः आरोग्य-
प्राप्त्यर्थं श्रीमहामृत्युंजयदेवताप्रीत्यर्थं यथासंख्याकं

श्रीमहामृत्युंजयमंत्रजपं अमुकगोत्रोत्पन्नः अमुक-
शर्माहं करिष्ये ॥

ॐ अस्य श्रीमहामृत्युंजयमंत्रस्य वसिष्ठऋषिः॥
अनुष्टुप्छन्दः ॥ श्रीत्र्यम्बकरुद्रो देवता श्रीबीजं ह्रीं
शक्तिःमम वा यजमानस्य शरीरे सर्वारिष्टनिवृत्तिपूर्व-
कसकलमनोरथसिद्ध्यर्थे जपे विनियोगः ॥ अथ ऋ-
ष्यादिन्यासः ॥ वसिष्ठऋषये नमः शिरसि ॥ अनु-
ष्टुप्छन्दसे नमः मुखे ॥ श्रीत्र्यंबकरुद्रो देवतायै नमः
हृदये॥श्रीं बीजाय नमः गुह्ये ॥ह्रीं शक्तये नमःपादयोः॥
अथ करन्यासः॥ॐह्रौं ॐ जूँसः भूर्भुवःस्वः त्र्यम्बकं

ॐ नमो भगवते रुद्राय शूलपाणये स्वाहा अंगुष्ठाभ्यां
नमः ॥ ॐह्रौं ॐ जूँ सः भूर्भुवः स्वः यजामहे ॥ ॐ
नमो भगवते रुद्राय अमृतमूर्त्तये मां जीवय२ तर्जनी-
भ्यां स्वाहा॥ॐह्रौं ओंजूँ सः भूर्भुवः स्वः सुगंधिम्पुष्टि-
वर्द्धनम्॥ओं नमो भगवते रुद्राय चंद्रशिरसे जटिने
स्वाहा मध्यमाभ्यां वषट्॥ओंह्रौं ओं जूँ सः भूर्भुवःस्वः
उर्व्वारुकमिव बन्धनात् ओं नमो भगवते रुद्राय
त्रिपुरान्तकाय ह्रां ह्रीं अनामिकाभ्यां हुं ॥ ओंह्रौं ओं
जूँसः भूर्भुवः स्वः मृत्योर्मुक्षीय ओं नमो भगवते रु-
द्राय त्रिलोचनाय ऋग्यजुःसाममंत्राय कनिष्ठि-

भ्यां वौषट्॥ओंहौं ओं जूँसः भूर्भुवःस्वः मामृतात्
ओं नमो भगवते रुद्राय अग्नित्रयाय ज्वल ज्वल मां
रक्ष रक्ष अघोरास्त्राय करतलकरपृष्ठाभ्यां फट्॥

एवं हृदयादि॥ ओंहौं ओं जूँ सः भूर्भुवः स्वः त्र्य-
म्बकं ओं नमो भगवते रुद्राय शूलपाणये स्वाहा
हृदयाय नमः॥ ओंहौं ओंजूँसः भूर्भुवः स्वः यजामहे
ओंनमो भगवते रुद्राय अमृतमूर्त्तये मां जीवय २
शिरसे स्वाहा॥ ओंहौं ओंजूँ सः भूर्भुवः स्वः सुगं-
धिम्पुष्टिवर्द्धनम् ओंनमो भगवते रुद्राय चन्द्रशिरसे
जटिने स्वाहा शिखायैवषट्॥ओंहौंओंजूँसःभूर्भुवःस्वः



उर्व्वारुकमिव वंधनात् ओं नमो भगवते रुद्राय
त्रिपुरान्तकाय ह्रां ह्रीं कवचायहुं॥ओंहौंओंजूँसःभूर्भुवः
स्वः मृत्योर्मुक्षीय ओंनमो भगवते रुद्राय त्रिलोच-
नाय ऋग्यजुःसाममंत्राय नेत्रत्रयाय वौषट्॥ ओं
हौं ओं जूँ सःभूर्भुवः स्वः मामृतात् ओं नमो भगवते
रुद्राय अग्नित्रयाय ज्वल ज्वल मां रक्ष रक्ष अघो-
रास्त्राय अस्त्रायफट्॥

अथ वर्णन्यासः॥ ओं त्र्यं नमः दक्षिणचरणाग्रे॥
बं नमः कं नमः यं नमः जां नमः दक्षिणचरणसंधि
चतुष्केषु॥ मं नमः वामचरणाग्रे॥ हें नमः सुं नमः

गं नमः धिं नमः वामचरणसंधिचतुष्केषु ॥ पुंनमः
गुह्ये । ष्टिं नमः आधारे । वं नमः जठरे । धांनमः हृदये।
नंनमः कंठे, ऊँनमः दक्षिणकराग्रे ॥ वंनमः रुंनमः
कंनमः मिंनमः दक्षिणकरसंधिचतुष्केषु ॥ बंनमः
वामकराग्रे ॥ बं नमः धं नमः नां नमः मृं नमः बाम-
करसंधिचतुष्के ॥ त्यों नमः वदने । मुं नमः ओष्ठयोः।
क्षीं नमः घ्राणयोः । यं नमः दृशोः । मां नमः श्रवणयोः।
मृं नमः भ्रुवोः । तात् नमः शिरसि ॥ पदन्यासः ॥
त्र्यम्बकं शिरसि । यजामहे भ्रुवोः । सुगन्धिं दृशोः॥
पुष्टिवर्द्धनम् मुखे । उर्व्वारुकं गण्डयोः । इव हृदये।

बंधनात् उदरे । मृत्योः गुह्ये । मुक्षीय ऊर्वोः । मा-
जानुनोः । अमृतात् पादयोः ॥ अत्र ध्यानम् ॥
हस्ताभ्यां कलशद्वयामृतरसैराप्लावयन्तं शिरो-
द्वाभ्यां तौ दधतं मृगाऽक्षवलये द्वाभ्यां वहन्तं परम् ॥
अंक न्यस्तकरद्वयाम्मृतघटं कैलाशकान्तं शिवम्।
स्वच्छाम्भो जगतं नवेन्दुमुकुटाभातं त्रिनेत्रं भजे ॥१॥
इति ध्यात्वा मानसोपचारैःसंपूज्य पूर्ववत् मालापूजनं
पूर्ववत् मूलमंत्रं जपेत् ॥ ॐ ह्रौं ॐ जूं सः भूर्भुवः स्वः
त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥उर्वारुकामिव
बधनान्मृत्योर्मुक्षीयमामृतात् भूर्भुवःस्वरों जूं सः ह्रौं

नि० ओम् ॥१॥मालाविसर्जनं पूर्ववत् ॥ ततो जपानन्तरं
॥१८॥ देवदक्षिणकरे जपं समर्पयेत् ॥ पुनःन्यासं ध्यानं जप म०प०
निवेदनम् ॥ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं
जपम् । सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर ॥१॥
प्रार्थना ॥मृत्युंजय महारुद्र त्राहि मां शरणागतम् ।
जन्ममृत्युजरारोगैः पीडितं कर्मबन्धनैः ॥ १ ॥ ता·
वकस्त्वद्गतःप्राणस्त्वच्चित्तोऽहं सदा मृड॥इति विज्ञाप्य
देवेशं जपेन्मन्त्रञ्च त्र्यम्बकम् ॥ २ ॥ क्षमापनम् ॥
अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम् ॥
विपरीतं तु तत्सर्वं क्षमस्व परमेश्वर॥१॥यदक्षरपदभ्रष्टं ॥१८॥

मात्राहीनं च यद्भवेत् ॥ तत्सर्वं क्ष[illegible] प्रसीद
परमेश्वर ॥ १ ॥अर्पणम् ॥ मयाकृतेन [illegible] सम्यक
महामृत्युंजयमंत्रजपाख्येन कर्मणा श्रीमहामृत्युंजय-
देवता प्रीयतां नमम ॥
जपसांगतासिद्ध्यर्थं यथाकामनया द्रव्येण तद्दशांश-
दुग्धाज्यसंसिक्तापामार्गसमिद्भिर्होमः ॥ तद्दशांश-
तर्पणमार्जनब्राह्मणभोजनानि कुर्यात॥

इति महामृत्युंजयविधिः समाप्त. ।

---

## अथ चन्द्रशेखराष्टकम् ।

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम् ।

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम् ॥
रत्नसानुशरासनं रजताद्रिशृंगनिकेतनम् ।
सिंजिनाकृतपन्नगेश्वरमच्युतानलसायकम् ॥
क्षिप्रदग्धपुरत्रयं त्रिदशालयैरभिवन्दितम् ।
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥१॥
चन्द्रशेखर ३ पाहि माम्, चन्द्रशेखर ३ रक्षमाम् ॥
पंचपादपपुष्पगन्धपदाम्बुजद्वयशोभितम् ।
भाललोचनजातपावकदग्धमन्मथविग्रहम् ॥
भस्मदिग्धकलेवरं भवनाशनं भवमव्ययम् ।
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥२॥



चन्द्रशेखर ३ पाहि माम् चन्द्रशेखर ३ रक्ष माम् ॥
मत्तवारणमुख्यचर्मकृतोत्तरीयमनोहरम् ।
पङ्कजासनपद्मलोचनपूजिताङ्घ्रिसरोरुहम् ।
देवसिन्धुतरंगसीकरसिक्तशोर्षजटाधरम् ॥
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः॥३॥
चन्द्रशेखर ३ पाहि माम्, चंद्रशेखर ३ रक्ष माम् ॥
कुंडलीकृतकुंडलीश्वरकुंडलं वृषवाहनम् ।
नारदादिमुनीश्वरस्तुतवैभवं भुवनेश्वरम् ॥
अन्धकान्तकमाश्रितामरपादपं शमितान्तकम् ।
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥४॥

नि० चन्द्रशेखर ३ पाहि माम् चंद्रशेखर ३ रक्ष माम् ॥ म०१०
॥२०॥ यक्षराजसखं भगाक्षहरं भुजंगविभूषणम् ।
शैलराजसुतापरिष्कृतचारुवामकलेवरम् ॥
क्ष्वेडनीलगलं परश्वधधारिणं मृगधारिणम् ।
चन्द्रशेखरमाश्रये मम किं करिष्याति वै यमः ॥ ५ ॥
चन्द्रशेखर ३ पाहि माम् चन्द्रशेखर ३ रक्ष माम् ॥
भेषजं भवरोगिणामखिलापदामपहारिणम् ।
दक्षयज्ञविनाशनं त्रिगुणात्मकं त्रिविलोचनम् ॥
भुक्तिमुक्तिफलप्रदं सकलाघसंघनिवर्हणम् । ॥२०॥
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥६॥

चन्द्रशेखर३ पाहि माम्, चंद्रशेखर ३ रक्ष माम् ॥
भक्तवत्सलमर्चितं निधिमक्षयं हरिदम्बरम् ।
सर्वभूतपतिं परात्परमप्रमेयमनोहरम् ॥
सोमवारिनभूहुताशनसोमपानिलखाकृतिम् ।
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ७ ॥
चन्द्रशेखर ३ पाहि माम्, चन्द्रशेखर ३ रक्ष माम् ।
विश्वसृष्टिविधायिनं पुनरेव पालनतत्परम् ।
संहरन्तमतः परं परमेष्ठिलोकनिवासिनम् ॥
क्रीडयन्तमहर्निशं गणनाथयूथसमावृतम् ।
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ८ ॥

चन्द्रशेखर ३ पाहि माम्, चन्द्रशेखर ३ रक्षमाम् ।
॥२१॥ मृत्युभीतमृकंडसूनुकृतस्तवं शिवसन्निधौ ॥
यत्र कुत्र च यः पठेन्नहि तस्य मृत्युभयं भवेत् ॥
पूर्णमायुररोगितामखिलार्थसम्पदमादरात् ।
चन्द्रशेखर एव तस्य ददाति मुक्तिमयत्नतः ॥६॥ इति

## अथ मार्कण्डेयकृतशिवस्तोत्रम् ।

रुद्रं पशुपतिं स्थाणुं नीलकण्ठमुमापतिम् ।
नमामि शिरसा देवं किन्नो मृत्युः करिष्यति ॥ १ ॥
शितिकण्ठंविरूपाक्षं निर्मलं निरुपद्रवम्॥नमामि० २ ॥२१॥
कालकण्ठं कलामूर्त्तिं कालाग्निकालनाशनम्॥नमामि

देवदेवं महादेवं देवेशं वृषभध्वजम्।नमामि० ॥४॥
अनन्तमव्ययं शान्तमक्षमालाधरं हरम्॥नमामि०।५॥
आनन्दं परमं देवं कैवल्यं पदगामिनम्॥ नमामि०॥६॥
त्रिनेत्रं पञ्चवक्त्रञ्च जटामुकुटमण्डितम्॥नमामि०॥७॥
प्रलयस्थितिकर्त्तारं सृष्टिकर्तारमीश्वरम्॥नमामि०८॥
गंगाधरं शशिधरं शंकरं शूलपाणिनम्। नमामि०९॥
भस्मोद्धूलितसर्वांगं नागाभरणभूषितम्॥नमामि०१०
मार्कण्डेयकृतं स्तोत्रं यः पठेच्छिवसन्निधौ ।
तस्य मृत्योर्भयं नास्ति ह्यल्पमृत्योर्भयं कुतः ॥११॥
मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे ।

अमृतेशाय शर्वाय महादेवाय ते नमः॥१२॥ इति

# अथ मृत्युञ्जयस्तोत्रम् ।

श्रीमृत्युञ्जयाय नमः ॥

अगस्त्य उवाच ॥ मंत्रः ॥

नमो रुद्राय नीलाय नीलकण्ठाय शम्भवे ।
अमृतेशाय शर्वाय महादेवाय ते नमः॥१॥इतिमंत्रः
अद्य मे सफलं जन्म अद्य मे सफलं तपः ।
अद्य मे सफलं ज्ञानं शम्भो त्वत्पाददर्शनात् ॥१॥
कृतार्थोऽहं कृतार्थोऽहं कृतार्थोऽहं महेश्वर ।
अद्य ते पादपद्मस्य दर्शनात् भक्तवत्सल ॥ २ ॥
शिवः शम्भुः शिवः शम्भुः शम्भुः शम्भुःशिवःशिवः



इति व्याहरतो नित्यं दिवसा यान्तु मे शुभाः॥३॥
शिवे भक्तिः शिवे भक्तिः शिवे भक्तिर्भवेत् दृढा ।
सदाभूयात्सदाभूयात्सदाभूयात्सदा मम ॥ ४ ॥
आजन्ममरणं यस्मान्महादेवान्यदैवतम् ।
न जानामि मनोवंशे भवत्विति मनो मम ॥ ५ ॥
जातस्य जायमानस्य गर्भस्थस्यापि देहिनः ।
माभूत्तत्र कुले जन्म यत्र शम्भुर्न दैवतम् ॥ ६ ॥
वयं धन्या वयं धन्या वयं धन्या जगत्पते ।
आदिदेवो महादेवो यदस्मत्कुलदैवतम् ॥ ७ ॥
हर शम्भो महादेव सर्वेषां मम वल्लभ ।

शिव शम्भोऽथ सर्वात्मन् नीलकण्ठ नमोऽस्तुते॥८॥
अगस्त्येन कृतं स्तोत्रं यः पठेत् शिवसन्निधौ।
शिवलोकमवाप्नोति शिवेन सह मोदते॥९॥

इति श्रीस्कंदपुराणे अगस्त्यकृतमृत्युञ्जयस्तोत्रम्।

---

## अथ बटुकभैरवनामावलिः प्रारंभः॥

ॐ अस्य श्रीआपदुद्धारक बटुकभैरवस्तोत्रमंत्रस्य बृहदारण्यको नाम ऋषिः। अनुष्टुप् छन्दः। श्रा-भैरवो देवता ह्रीं बीजम्। बटुकायेति शक्तिः। प्रणवः कीलकम्। ममधर्मार्थकाममोक्षार्थे जपे विनियोगः॥ करन्यासः॥ ॐ ह्रां वां अंगुष्ठा०॥ ॐ ह्रीं वीं तर्जनी०॥



ॐ ह्रूं वूं मध्यमा०॥ ॐ ह्रैं वैं अनामिका०॥ ॐ ह्रौं वौं कनिष्ठिका०॥ ॐ ह्रः वः करतल०। एवं हृदयादि न्यासः॥ अथ ध्यानम्॥ करकलितकपालः कुंडली-दण्डपाणिस्तरुणतिमिरनीलव्यालयज्ञोपवीती। क्रतुसमयसपर्याविघ्नविच्छेदहेतुर्जयति बटुकनाथः सिद्धिदः साधकानाम्॥१॥ इति ध्यात्वा मानसोपचारैः सम्पूज्य। अथ मंत्रः ॐ ह्रीं बटुकाय आपदुद्धारणाय कुरु कुरु बटुकाय ह्रीं ॐ॥१॥ इति मंत्रः॥ नमो बटुकनाथाय॥

ॐ भैरवो भूतनाथश्च भूतात्मा भूतभावनः।

क्षेत्रज्ञः क्षेत्रपालश्च क्षेत्रदः क्षत्रियो विराट् ॥ १ ॥
॥२४॥ श्मशानवासी मांसाशी खर्पराशी स्मरान्तकः ।
रक्तपः पानपः सिद्धः सिद्धिदः सिद्धिसेवितः ॥ २ ॥
कंकालः कालशमनः कलाकाष्ठातनुः कविः ।
त्रिनेत्रो बहुनेत्रश्च तथा पिङ्गललोचनः ॥ ३ ॥
शूलपाणिः खड्गपाणिः कंकाली धूम्रलोचनः ।
अभीरुर्भैरवीनाथो भूतपो योगिनीपतिः ॥ ४ ॥
धनदो धनहारी च धनवान् प्रतिभानवान् ।
नागहारो नागपाशो व्योमकेशः कपालभृत् ॥ ५ ॥ ॥२४॥
कालः कपालमाली च कमनीयः कलानिधिः ।

त्रिलोचनो ज्वलन्नेत्रस्त्रिशिखी च त्रिलोकपः ॥ ६ ॥
त्रिनेत्रतनयो डिंभः शान्तः शान्तजनप्रियः ।
बटुको बहुवेषश्च खट्वाङ्गवरधारकः ॥ ७ ॥
भूताध्यक्षः पशुपतिर्भिक्षुकः परिचारकः ।
धूर्त्तो दिगम्बरः शूरो हरिणः पाण्डुलोचनः ॥ ८ ॥
प्रशान्तः शान्तिदः शुद्धः शंकरः प्रियबांधवः ।
अष्टमूर्तिर्निधीशश्च ज्ञानचक्षुस्तपोमयः ॥ ९ ॥
अष्टाधारः षडाधारः सर्पयुक्तः शिखीसखः ।
भूधरो भूधराधीशो भूपतिर्भूधरात्मजः ॥ १० ॥
कंकालधारी मुंडी च आंत्रयज्ञोपवीतवान् ।

१ न.गवज्ञा

नि॰ जृम्भणो मोहनः स्तंभी मारणः क्षोभणस्तथा ॥११॥ प्र.पृ.
॥२५॥ शुद्धनीलाञ्जनप्रख्यो दैत्यहा मुंडभूषितः ।
बलिभुग्बलिभुङ्नाथो बालो बालपराक्रमः ॥ १२॥
सर्वापत्तारणो दुर्गो दुष्टभूतनिषेवितः ।
कामी कलानिधिः कान्तः कामिनीवशकृद्वशी ॥१३॥
सर्वसिद्धिप्रदो वैद्यः प्रभुर्विष्णुरितीव हि ।
अष्टोत्तरशतं नाम्नां भैरवस्य महात्मनः ॥ १४ ॥
मया ते कथितं देवि रहस्यं सर्वकामदम् । ॥२६॥
य इदं पठति स्तोत्रं नामाष्टशतमुत्तमम् ॥ १५ ॥

न तस्य दुरितं किंचिन्न च भूतभयं तथा ।
न च माराभयं तस्य ग्रहराजभयं तथा ॥ १६ ॥
न शत्रुभ्यो भयं क्वापि प्राप्नुयान्मानवः क्वचित् ।
पातकानां भयं चैव पठेत्स्तोत्रमनुत्तमम् ॥ १७ ॥
मारीभये राजभये तथा चौराग्निजे भये ।
औत्पातिके महाघोरे तथा दुःस्वप्नदर्शने ॥ १८ ॥
बंधने च तथा घोरे पठेत्स्तोत्रमनन्यधीः ।
सर्वं प्रशमनं याति भयं भैरवकीर्तनात् ॥ १९ ॥
इति श्रीरुद्रयामले पार्वतीश्वरसंवादे बटुकभैरव
नामावलिः ॥

आदौ न्यासं ध्यानम् ॥

शुद्धस्फटिकसंकाशं सहस्रादित्यवर्चसम् ।
नीलजीमूतसंकाशं नीलांजनसमप्रभम् ॥
अष्टबाहुं त्रिनयनं चतुर्बाहुं द्विबाहुकम् ॥ १ ॥
दंष्ट्रा करालवदनं नूपुरारावसंकुलम् ।
भुजंगमाखिलं देवमग्निवर्णशिरारुहम् ॥ २ ॥
दिगंबरं कुमारेशं बटुकाख्यं महाबलम् ॥
खट्वांगमसिपाशं च शूलं दक्षिणभागतः ॥ ३ ॥
डमरुंच कपालं च वरदं भुजगं तथा ।
आत्मवर्णसमोपेतं सारमेयसमन्वितम् ॥ ४ ॥



एवं ध्यात्वा ॥ ॐ ह्रीं भैरव भैरव भयकरहर मां रक्ष रक्ष हुं फट् स्वाहा॥ इति मंत्रेण प्रार्थयित्वा यंत्र-पीठे आवाहनादिमुद्रां प्रदर्शयेत् षोडशोपचारै-रभ्यर्च्य बलिदानं कुर्यात् ॥ श्रीबटुकप्रीतये बलि-दानमहं करिष्ये । गणपतिदुर्गा रक्तैश्चंदनाक्षत-पुष्पैरभ्यर्च्य देवस्याग्रे त्रिकोणं चतुरस्रं मंडलं कृत्वा तत्र गंधाद्यैरभ्यर्च्य बलिपात्रे माषभक्तं पायसान्नं मोदकं चणकादीनि च कवलाकारं संपादितं सदीप-कं निधाय गंधपुष्पाभ्यां मूलांते बलिरूपाय नमः इति बलिं संपूज्य । देवं तत्र संचिंत्य हस्ते जलमादा-

नि य मूलमंत्रमुच्चार्य भूमौ निक्षिप्य स्वहस्ते बलि- प्र०१२
॥२७॥ मादाय देवाय समर्पयेत् ।

मंत्रः–ॐएह्येहि देवी पुत्र बटुकनाथ कपिल जटा भारभासुरत्रिनेत्र ज्वालामुख मम सर्व विघ्नां नाशय नाशय सर्वोपचार सहित सदीप अमुक बलिं गृहण गृहण स्वाहा॥अथवा मूलेन बलिं समर्पयेत्॥पश्चात् अष्टोत्तरशत मूलमंत्रं जपित्वा ॥ ॐ ह्रीं बटुकाय आपदुद्धारणाय कुरु कुरु बटुकाय ह्रीं ॐतदनन्तर ॥२७॥
नामावलिं पठेत् ॥ इति शुभम् ॥

(स्कंद पुराणे)

विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु ।
निर्विघ्नार्थं मुनिश्रेष्ठ तथोद्वेगाकुलेषु च ॥
वश्यकर्माभिचारादि तथैवोच्चाटनादिकम् ।
नवग्रहमखं कृत्वा ततः काम्यं समाचरेत् ॥
अन्यथा फलदं पुंसां न काम्यं जायते क्वचित् ।
तस्माद्युतहोमस्य विधानं तु समाचरेत् ॥ तथा ॥
अन्नहीनो दहेराष्ट्रं मंत्रहीनस्तु ऋत्विजः ।
यजमानमदाक्षिण्यो नास्ति यज्ञसमो रिपुः ॥
अहिंसकस्य दांतस्य धर्मार्जितधनस्य च ।

नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥
ग्रहा गावो नरेंद्राश्च ब्राह्मणाश्च विशेषतः ।
पूजिताः पूजयंत्येते निर्दहंत्यवमानिताः ॥
ग्रहाणामिदमातिथ्यं कुर्यात्संवत्सरादपि ।
आरोग्यवलसंपन्नो जीवेच्च शरदां शतम् ॥ पुनः -
देवदानवगन्धर्वा यक्षराक्षसकिन्नराः ।
पीड्यन्ते ग्रहपीडाभिः किं पुनर्भुवि मानवाः ॥ १ ॥
शनैश्चरेण सौदासो नरमांसे नियोजितः ।
राहुणा पीडितो राजा नलो भ्रान्तो महीतले ॥ २ ॥



अंगारकविरोधेन रामो राष्ट्राद्विवासितः ।

अष्टमेन शशांकेन हिरण्यकशिपुर्हतः ॥ ३ ॥
रविणा सप्तमस्थेन रावणो विनिपातितः ।
गुरुणा जन्मसंस्थेन हतो राजा सुयोधनः ॥४॥
पाण्डवाः सौम्यपीडायां विकर्मणि नियोजितः ।
षष्ठेनोशनसा युद्धे हिरण्याक्षो निपातितः ॥५॥
एते चान्ये च बहवो ग्रहदोषैस्तु पीडिताः ॥

याज्ञवल्क्यः ।

ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ।
भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ॥

 

कार्यारंभेषु सर्वेषु प्रतिष्ठास्वध्वरेषु च।
नववेश्मप्रवेशे च गर्भाधानादिकर्मसु।
आरोग्यस्नानसमये संक्रान्तौ रोगसम्भवे॥
अभिचारे च यः कुर्याद्ग्रहपूजां विधानतः।
सोऽभीष्टं फलमाप्नोति निर्विघ्नेन न संशयः॥
अकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत्।
वृद्ध्यायुःपुष्टिकामो वा तथैवाभिचरन्नपि॥

अथ वेदोक्तसर्वाजनवग्रहमंत्रजपविधिः॥शुभासने उपविश्य आचमनं प्राणायामं गणपतिस्मरणम्। 

संकल्पः॥अद्यपूर्वो० ममाऽत्मनः श्रुतिस्मृतिपुराणोक्तपुण्यफलप्राप्त्यर्थं मम जन्मराशेः सकाशाद्विरुद्धचतुर्थाष्टमद्वादशादिस्थानस्थित अमुकग्रहकृतसर्वारिष्टनिवृत्तिपूर्वक आयुरारोग्यैश्वर्यादिभिर्वृद्ध्यर्थं अमुकग्रहदेवताप्रसन्नार्थं यथासंख्याकं वैदिकामुकग्रहमंत्रजपं अमुकगोत्रोत्पन्नः अमुकशर्माऽहं करिष्ये।

अथ आदित्यमन्त्रः॥ ॐ आकृष्णेति मंत्रस्य हिरण्यस्तूपाङ्गिरसऋषिस्त्रिष्टुप्छन्दः सूर्योदेवता सूर्यप्रीत्यर्थे जपे विनियोगः॥ अथ देहांगन्यासः॥ आकृष्णेन शिरसि॥ रजसा ललाटे॥ वर्त्तमानो मुखे॥ निवेशयन्

हृदये ॥ अमृतं नाभौ ॥ मर्त्यं च कट्याम्॥हिरण्ययेन
सविता ऊर्वोः । रथेना जान्वोः॥ देवो याति जंघयोः॥
भुवनानि पश्यन्पादयोः॥अथ करन्यासः॥आकृष्णेन
रजसा अंगुष्ठाभ्यां नमः॥वर्त्तमानो निवेशयन् तर्जनी-
भ्यां नमः ॥ अमृतं मर्त्यं च मध्यमाभ्यांनमः ॥ हिर-
ण्ययेन अनामिकाभ्यां नमः ॥ सवितारथेना कनिष्ठि-
काभ्यां नमः ॥ देवो याति भुवनानि पश्यन् करतल-
करपृष्ठाभ्यां नमः ॥ एवं हृदयादिन्यासः ॥ आकृष्णेन ॥३०॥
रजसा हृदयाय नमः ॥ वर्तमानो निवेशयन् शिरसे
स्वाहा ॥ अमृतं मर्त्यं च शिखायै वषट्॥ हिरण्ययेन

कवचायहुं । सविता रथेना नेत्रत्रयाय वौषट् ॥ देवो
याति भुवनानि पश्यन् अस्त्रायफट् ॥ अथ ध्यानम्॥
पद्मासनः पद्मकरो द्विबाहुःपद्मद्युतिःसप्ततुरङ्गवाहनः
दिवाकरो लोकगुरुःकिरीटी मयि प्रसादं विदधातु देव
गायत्री ॥ आदित्याय विद्महे दिवाकराय धीमहि
तन्नः सूर्यः प्रचोदयात् ॥ १ ॥ ॐ ह्राँ ह्रीं ह्रौं सः
ॐ भूर्भुवः स्वः--ॐआकृष्णेनरजसा वर्तमानो निवेश-
यन्नमृतम्मर्त्यञ्च॥हिरण्ययेनसवितारथेना देवो याति
भुवनानि पश्यन् ॐस्वः भुवः भूः ॐ सः ह्रौं ह्रीं ह्राँ
ॐ सूर्याय नमः ॥ १ ॥

 



अथ चन्द्रमंत्रः॥इमन्देवेति मन्त्रस्य गौतमऋषिः।
सोमो देवता विराट्छन्दः सोमप्रीत्यर्थे जपे विनियोगः
अथ देहांगन्यासः॥इमं देवा शिरसि॥असपत्नꣳ ललाटे
सुवध्वं नासिकायाम् ॥ महते क्षत्राय मुखे । महते
ज्येष्ठ्याय हृदये । महते जानराज्याय उदरे॥इन्द्रस्ये-
न्द्रियाय नाभौ । इमममुष्य कट्याम्॥पुत्रममुष्यै मेढ्रे।
पुत्रमस्यै ऊर्वोः ॥ विशऽएष वो जान्वोः ॥ मीराजा
जंघयोः॥ सोमोऽस्माकं गुल्फयोः ॥ ब्राह्मणानाꣳ
राजा पादयोः ॥ अथ करन्यासः ॥ इमन्देवाऽअस-
पत्नꣳ सुवध्वं अंगुष्ठाभ्यां नमः ॥ महते क्षत्राय महते ३ ॥

ज्येष्ठ्याय तर्जनी०॥महते जानराज्यायेन्द्रस्येन्द्रियाय
मध्यमा०॥ इमममुष्य पुत्रममुष्यै पुत्रमस्यै अनामि-
का०॥ विशऽएष वो मी राजा कनिष्ठिका०॥सोमोऽ
स्माकं ब्राह्मणानाꣳ राजा करतल०॥ एवं हृदयादि
न्यासः ॥ इमन्देवाऽअसपत्नꣳ सुवध्वं हृदयाय ० ॥
महते क्षत्राय महते ज्येष्ठ्याय शिरसे० महते जान
राज्यायेन्द्रस्येन्द्रियाय शिखायै० ॥ इमममुष्य पुत्र
ममुष्यै पुत्रमस्यै कवचा० ॥ विशऽएष वो मी राजा
नेत्रत्रयाय० ॥ सोमोऽस्माकं ब्राह्मणाꣳ राजा
अस्त्रायफट् ॥ अथ ध्यानम् ॥ श्वेताम्बरः श्वेतविभू-

षणश्च श्वेतद्युतिर्दण्डधरो द्विबाहुः ॥चन्द्रोऽमृतात्मा
वरदः किरीटी मयि प्रसादं विदधातु देवः ॥ १ ॥
गायत्री ॥ अत्रिपुत्राय विद्महे सागरोद्भवाय धीमहि॥
तन्नश्चन्द्रः प्रचोदयात् ॥ १ ॥ मंत्रः ॥ॐ श्राँ श्रीं,
श्रौं, सः ॐभूर्भुवः स्वः ॐइमन्देवाऽअसपत्न ँ सु-
वध्वम्महते क्षत्राय महते ज्येष्ठ्याय महते जानरा
ज्ज्यायेन्द्रस्येन्द्रियाय ॥ इममभुष्य पुत्रममुष्यै पुत्रम-
स्यै विशऽएषवोमीराजासोमोस्माकम्ब्राह्मणानाँ
राजा ॥ॐस्वः भुवः भूः ॐ सः श्रौं श्रीं श्राँ श्रों
सोमाय नमः ॥ अथ भौममन्त्रः अग्निर्मूर्द्धाति मंत्रस्य
विरूपाङ्गिरस ऋषिः। अग्निर्देवता । गायत्रीछन्दः।
भौमप्रीत्यर्थे जपे विनियोगः ॥ अथ देहांगन्यासः ॥
अग्निःशिरसि ॥ मूर्द्धा ललाटे॥ दिवः मुखे ॥ ककुत्
हृदये ॥ पतिः उदरे ॥ पृथिव्या नाभौ॥अयं कट्याम्
अपा छं जान्वोः ॥ रेता छं सि गुल्फयोः॥जिन्वति
पादयोः ॥ अथ करन्यासः ॥ अग्निर्मूर्द्धा अंगुष्ठा०
दिवः ककुत् तर्जनी० ॥ पतिः मध्यमा० ॥ पृथिव्या
अयम् अनामिका० ॥अपा छं रेता छं सि कनिष्ठिका०
जिन्वति करतल० ॥ एवं हृदयादिन्यासः ॥ अग्नि-
र्मूर्द्धा हृदयाय० ॥ दिवः ककुत् शिरसे० ॥ पतिः

शिखायै० ॥ पृथिव्या अयं कवचा० ॥ अपा छं रेता छं सि नेत्रत्र० ॥ जिन्वति अस्त्राय० ॥ अथ ध्यानम् ॥ रक्ताम्बरो रक्तवपुः किरीटी चतुर्भुजो मेष-गतो गदाधरः ॥ धरासुतः शक्तिधरश्च शूली सदा यमस्म द्वरदः प्रसन्नः ॥ १ ॥ गायत्री ॥ क्षितिपुत्राय विद्महे लोहितांगाय धीमहि ॥ तन्नो भौमः प्रचो-दयात् ॥ मंत्रः ॥

ओं क्राँ क्रीं क्रौं सः भूर्भुवः स्वः ओं अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अपा छं रेता छं सि जिन्वति ॥ ओं स्वः भुवः भूः ओंसः क्रौं क्रीं

क्राँ ओं भौमाय नमः ॥ ३ ॥ अथ सौम्यमंत्रः ॥ उद्बुध्यस्वेतिमंत्रस्य परमेष्ठी प्रजापति ऋषिः। त्रिष्टु-प्छन्दः। बुधो देवता॥बुधप्रीत्यर्थे जपे विनियोगः ॥ अथ देहांगन्यासः ॥ उद्बुध्यस्वेति शिरसि ॥ अग्ने-प्रति ललाटे ॥जागृहित्वं मुखे ॥ इष्टापूर्ते हृदये ॥ स छं सृजेथा मयञ्च नाभौ ॥ अस्मिन्त्सधस्थे कट्याम् अद्ध्युत्तरस्मिन् ऊर्वोः ॥ विश्वेदेवा जान्वोः ॥ यज-मानश्च गुल्फयोः ॥ सीदत पादयोः॥ अथ करन्यासः उद्बुध्यस्वाग्ने प्रतिजागृहित्वं अंगुष्ठाभ्यां नमः ॥ इष्टापूर्ते तर्जनी० ॥ स ँ सृजेथा मयं च

नि

|२३||



मध्यमा० ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन् अना-
मिका० ॥ विश्वेदेवा यजमानश्च कनिष्ठिका ० ॥
सीदत करतल० ॥ एवं हृदयादिन्यासः॥उद्बुध्यस्वाग्ने
प्रतिजागृहित्वं हृदयाय० ॥ इष्टापूर्ते शिरसे० ॥ स
ꣳसृजेथा मयञ्च शिखायै०॥ अस्मिन्त्सधस्थेऽअध्यु-
त्तरस्मिन् कवचा०॥ विश्वेदेवा यजमानश्चनेत्रत्रा०॥
सीदत अस्त्राय ० ॥ अथ ध्यानम् ॥ पीताम्बरः
पीतवपुः किरीटी चतुर्भुजो दंडधरश्च हारी ॥
चर्मासिधृक् सोमसुतो गदाभृत् सिंहाधिरूढो वरदो
बुधश्च ॥ १॥ग यत्री ॥ चन्द्रपुत्राय विद्महे रोहिणी-



प्रियाय धीमहि तन्नो बुधः प्रचोदयात्॥ १ ॥मंत्रः ॥
ॐ ब्राँ ब्रीं ब्रौं सः भूर्भुवः स्वःओं उद्बुध्यस्वाग्नेप्रतिजा
गृहित्वामिष्टापूर्ते सꣳ सृजेथामयञ्च अस्मिन्त्सधस्थे
ऽअध्युत्तरास्मिन्विश्वेदेवा यजमानश्च सीदत॥ओं स्वः
भुवः भूः ओं सः ब्रौं ब्रीं ब्राँ ओं सौम्याय नमः॥अथ
बृहस्पति मंत्रः॥बृहस्पतेति मंत्रस्य गृत्समद ऋषिः।
अनुष्टुप्छन्दः॥ब्रह्मा देवता॥बृहस्पतिप्रीत्यर्थे जपे विनि-
योगः॥ अथ देहांगन्यासः ॥ बृहस्पते शिरसि॥अति
यदर्यो ललाटे अर्हाद्युमत् मुखे ॥ विभातिक्रतुमत्
हृदय॥जनेषु नाभौ॥यद्दीदयत् कटयाम्॥शवसऋतप्र-

जातऊर्वौः।तदस्मासुद्रविणंजान्वोः।धेहिगुल्फयोःचित्रं प्र०प०
पादयोः॥अथ करन्यासः॥ बृहस्पतेऽअति यदर्य्यो
अंगुष्ठा.॥अर्हाद्युमत तर्जनी.॥विभातिक्रतुमत्मध्यमा.
जनेषु अनामिका०॥ यद्दीदयच्छवसऋतप्रजातत-
दस्मासु कनिष्ठिका०॥द्रविणं धेहि चित्रम् करतल०॥
एवं हृदयादिन्यासः।बृहस्पतेऽअतियदर्य्यो हृदयाय०।
अर्हाद्युमत् शिरसे०॥विभातिक्रतुमत्शिखायै०।जनेषु
कवचा०।यद्दीदयच्छवसऋतप्रजाततदस्मासुनेत्रत्र०।
द्रविणं धेहि चित्रम् अस्त्रायफट्॥ अथ ध्यानम्॥
पीताम्बरः पीतवपुः किरीटी चतुर्भुजो देवगुरुः ॥३५॥

प्रशान्तः॥तथाक्षसूत्रं च कमण्डलुञ्च दण्डञ्च बिभ्रद्वर-
दोऽस्तु मह्यम्॥१॥ गायत्री॥ अंगिरोजाताय
विद्महे वाचस्पतये धीमहि॥ तन्नो गुरुः प्रचोद-
यात्॥१॥ मंत्रः॥ ओं ह्रां ह्रीं ह्रौं सः भूर्भुवः
स्वः ओं बृहस्पतेऽअतियदर्य्योऽअर्हाद्युमद्विभाति॥
क्रतुमज्जनेषु॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मा
सुद्रविणन्धेहि चित्रम्॥ ओंस्वः भुवः भूः ओं सःह्रौं
ह्रीं ह्रां ॐ बृहस्पतये नमः॥

अथ शुक्रमंत्रः॥ अन्नात्परिस्रुतेति मंत्रस्य प्रजा-
पतिर्ऋषिः। अनुष्टुप्छन्दः। शुक्रो देवता। शुक्रप्री-

त्यर्थे जपे विनियोगः ॥ अथ देहांगन्यासः॥ अन्नात्प
रिस्रुतः शिरसि ॥ रसं ब्रह्मणा ललाटे ॥ व्यपि-
बत्क्षत्रं मुखे ॥ पयः सोमं हृदये ॥ प्रजापतिः नाभौ॥
ऋतेन सत्यं कट्याम् । इन्द्रियं विपानꣳ गुदे ॥ शुक्रं
वृषणे ॥ अन्धस ऊर्वोः ॥ इन्द्रस्येन्द्रियं जानुनोः ॥
इदं पयः गुल्फयोः ॥ अमृतं मधु पादयोः ॥ अथ
करन्यासः॥ अन्नात्परिस्रुतोरसं अंगुष्ठा० ॥ ब्रह्मणा-
व्यपिबत्क्षत्रं तर्जनी ०॥पयःसोमम्प्रजापतिःमध्यमा०
ऋतेन सत्यमिन्द्रियं अनामिका० ॥ विपानꣳशुक्र-
मन्धस कनिष्ठिका ०॥इन्द्रस्येन्द्रियमिदम्पयामृतंमधु





करतल० ॥ एवं हृदयादिन्यासः ॥ अन्नात्परिस्रुतो
रसं हृदया० ॥ ब्राह्मणाव्यपिबत्क्षत्रं शिरसे०॥ पयः
सोमं प्रजापतिः शिखायै० ॥ ऋतेनसत्यमिन्द्रियं
कवचा० ॥ विपान ꣳ शुक्रमन्धस नेत्रत्र ०॥इन्द्रस्ये-
न्द्रियमिदम्पयोमृतम्मधु अस्त्राय० ॥ अथ ध्यानम् ॥
श्वेताम्बरः श्वेतवपुः किरीटी चतुर्भुजो दैत्यगुरुःप्रशा-
न्तः ॥तथाक्षसूत्रञ्च कमण्डलुञ्च दण्डञ्चबिभ्रद्वरदोऽस्तु
मह्यम् ॥ १ ॥ गायत्री ॥ भृगुवंशजाताय विद्महे
श्वेतवाहनाय धीमहि तन्नः कविः प्रचोदयात् ॥१॥
मंत्रः॥ओं द्रां द्रीं द्रौं सःभूर्भुवः स्वः ओं अन्नात्परि-

नि० सुतोरसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः॥
॥३६॥ ऋतेन सत्यामिन्द्रियं विपानꣳशुक्रमन्धसऽइंद्रस्ये- प्र०७०
न्द्रियमिदम्पयोमृतम्मधु ॥ ओं स्वः भुवः भूः ओं स
द्रौं द्रीं द्रां ओं शुक्राय नमः ॥

अथ शनिमंत्रः ॥ शन्नो देवीति मंत्रस्य सिन्धु
द्वीपऋषिः। गायत्रीछन्दः आपो देवता शनिप्रीत्यर्थे
जपे विनियोगः ॥ अथ न्यासः ॥ शन्नो शिरसि
देवीःललाटे ॥ अभिष्टय मुखे ॥ आपो कंठे ॥ भ-
वन्तु हृदये ॥ पीतये नाभौ ॥ शं कट्याम्॥योः ऊर्वोः॥ ॥३६॥
अभि जान्वोः ॥ स्रवन्तु गुल्फयोः ॥ नः पादयोः ॥

अथ करन्यासः ॥ शन्नो देवीःअंगुष्ठा० ॥ अभिष्टये
तर्जनी०॥आपो भवन्तु मध्यमा०॥पीतये अनामि०॥
शंय्योरभि कनिष्ठि० ॥ स्रवन्तु नः करतल० ॥ एवं
हृदयादिन्यासः॥ शन्नो देवीःहृदयाय० ॥ अभिष्टये
शिरसे०॥ आपो भवन्तु शिखायै०॥पीतये कवचा०॥
शंय्योरभि नेत्रत्र०॥ स्रवन्तु नः अस्त्राय० ॥ अथ
ध्यानम ॥ नीलाम्बरः शूलधरः किरीटी गृध्रस्थित-
स्त्रासकरो धनुष्मान् ॥ चतुर्भुजः सूर्यसुतः प्रशान्तः
सदास्तु मह्यं वरदोऽल्पगामी ॥ १ ॥ गायत्री ॥
कृष्णांगाय विद्महे रविपुत्राय धीमहि ॥ तन्नःसौरिः

प्रचोदयात् ॥ १ ॥ मंत्रः ॥ ओं खाँ खीँ खौँ सः ओं भूर्भुवः स्वः ओं शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ॥ शंय्योरभिस्रवन्तु नः ॥ ओं स्वः भुवः भूः ओं सः खौँ खीँ खाँ ओं शनैश्चराय नमः ॥ ७ ॥

अथ राहुमंत्रः ॥ कयानश्चित्रेति मन्त्रस्य वामदेव ऋषिः ॥ गायत्री छन्दः ॥ राहुर्देवता ॥ राहुप्रीत्यर्थे जपे विनियोगः ॥ अथ देहांगन्यासः ॥ कयाशिरसि ॥ नः ललाटे ॥ चित्र मुखे ॥ आ कंठे ॥ भुव हृदये ॥ दूती नाभौ ॥ सदा कट्याम् । वृधः मेढ्रे ॥ सखा ऊर्वोः ॥ कया जान्वोः ॥ शचिष्ठया गुल्फयोः ॥ वृता पादयोः ।



अथ करन्यासः ॥ कया नः अंगुष्ठा० ॥ चित्रआ तर्ज्जनी० ॥ भुवदूती मध्यमा० ॥ सदावृधः सखा अनामिका० ॥ कया कनिष्ठिका० ॥ शचिष्ठया वृता करतल० ॥ एवं हृदयादि० ॥ कया नः हृदयाय० ॥ चित्र आ शिरस० । भुवदूती शिखायै० ॥ सदावृधः सखा कवचा० ॥ कया नेत्रत्र० ॥ शचिष्ठया वृता अस्त्राय० ॥ अथ ध्यानम् ॥ नीलाम्बरो नीलवपुः किरीटी करालवक्त्रः करवालशूली ॥ चतुर्भुजश्चक्रधरश्च राहुः सिंहाधिरूढो वरदोऽस्तु मह्यम् ॥ १ ॥ गायत्री ॥ नीलवर्णाय विद्महे सैंहिकेयाय धीमहि तन्नो राहुः प्रचो-

१ सिंहासनस्था

दयात्॥१॥मंत्रः॥ॐ भ्राँ भ्रीँ भ्रौँ सः ॐ भूर्भुवःस्वः ॐ कयानश्चित्रऽआभुवदूती सदावृधः सखा॥ कया-शचिष्ठयावृता ॐ स्वः भुवः भूः ॐ सः भ्रौँ भ्रीँ भ्राँ ॐ राहवे नमः॥

अथ केतुमंत्रः॥ केतुं कृण्वन्निति मंत्रस्य मधुच्छन्द ऋषिः। गायत्रीच्छन्दः। केतुर्देवता॥ केतुप्रीत्यर्थे जपे विनियोगः॥ अथ देहांगन्यासः॥केतुं शिरसि॥ कृण्वन् ललाटे॥ अकेतवे मुखे ॥ पेशो हृदये॥ मर्या नाभौ॥अपेशसे कट्याम् ॥सं ऊर्व्वोः उषद्भिः जान्वोः॥ अजायथाः पादयोः॥ अथ कर-



न्यासः॥ केतु कृण्वन् अंगुष्ठा०॥अकेतवे तर्ज्जनी०॥ पेशो मर्या मध्यमा० ॥ अपेशसे अनामिका०॥ समुषद्भिः कनिष्ठिका० ॥ अजायथाः करतल०॥ एवं हृदयादिन्यासः॥ केतुङ्कृण्वन् हृदयाय नमः॥ अकेतवे शिरसे०॥ पेशोमर्या शिखायै व० । अपेशसे कवचायहुं॥ समुषद्भिः नेत्रत्र०॥ अजायथाः अस्त्रायफट्॥ अथ ध्यानम्॥ धूम्रो द्विबाहुर्वरदो गदाधरो गृध्रासनस्थो विकृताननश्च॥ किरीटकेयूर विभूषितो यः सदाऽस्तु मे केतुगणः प्रशान्तः॥१॥ गायत्री॥ अश्ववाय विद्महे कपोतवाहनाय धीमहि

तन्नः केतुः प्रचोदयात् ॥ अथ मंत्रः ॥ ॐ स्रौँ स्रीँ स्राँ सः ॐ भूर्भुवः स्वः ॐ केतुङ्कृण्वंन्न केतवे पेशो मर्य्याऽअपेशसे ॥ समुषद्भिरजायथा ॥ ॐ स्वः, भुवः, भूः, ॐ सः, स्रौँ, स्रीँ, स्राँ, ॐ केतवे नमः॥ जपान्ते पुनर्न्यासं ध्यानमर्पणम् ॥ अनेन यथासंख्यककृतामुकग्रहमंत्रजपेन अमुकग्रहरूपी परमेश्वरः प्रीयतां

नवग्रह जपसंख्या- रवेः सप्तसहस्राणि चन्द्रस्य दशस्मृताः । भौमे दशसहस्रं च बुध अष्टसहस्रकम् । एकोनविंशतिः जीवे भृगो नृप सहस्रकम् ॥ त्रयोविंशतिः सौरेश्च राहो अष्टादशस्मृताः ॥ केतोः सप्तसहस्रं जपसंख्या प्रकीर्तिता॥ कलौ चतुर्गुणम् ॥



नमम ॥ इति वेदोक्तं सबीजं नवग्रहन्यासं ध्यानं सम्पूर्णम् ॥ श्रीरस्तु ।

---

सूर्य॰ जपान्ते अर्कसमित्तिलपायसघृतैर्दशांश होमः तद्दशांश तर्पणं तद्दशांश मार्ज्जनं तद्दशांश ब्राह्मणभोजनम् जपसंख्या ७००० ॥ चन्द्राय॰ पलाश॰ जप ११००० ॥ भौमाय॰ खदिर॰ १०००० ॥ बुधाय॰ अपामार्ग८००० ॥ गुरु अश्वत्थ॰ जप १९००० ॥ शुक्राय॰ उदुम्बर॰ जप ११०००॥ शनैश्चराय॰ शमीस॰ जप२३००० राहव दूर्वा॰ जप१८०००॥ केतुः कुश॰स॰ जप७०००

अन्यत्सर्वं पूर्ववत् ॥ यस्मिंश्च निगदेनैव जपसंख्यां विधीयते॥तत्र सर्वत्र मंत्राणां संख्यावृद्धिर्युगक्रमात्॥ कल्पोक्तैव कृते संख्या त्रेतायां द्विगुणाभवेत्॥ द्वापरे त्रिगुणाप्रोक्ता कलौसंख्या चतुर्गुणा ॥ १ ॥ इति वैशंपायन संहिता वचनं ॥ 

## अथ विष्णु आरती प्रारम्भः ।

वन्दे गोपालं २ मृगमदशोभितभालं २ करुणा कल्लोलं जयदेव जयदेव ॥ १ ॥ निर्गुण सगुणाकारं संहृतभूभारं ॥ २॥ मुरहर नन्दकुमारं २ मुनिजन-सुखकारम् ॥ २ ॥ वृन्दावनसंचारं कौस्तुभमणि 

हारं २ करुणा पारावार २ गोवर्द्धनधारं जय-देव २॥ ३ ॥ कुंचितकुंतलनीलं शरदन्दोर्वदनं २ मणिगणमंडितकुंडल २ राजितश्रुतियुगलं २ विकचेन्दीवरनयनं विलसितभ्रूयुगलं २ बिंबाधर-मतिसुन्दर २ नासामणिलोलं जयदेव २ ॥ ४ ॥ कम्बूग्रीवं कौस्तुभमणिकण्ठाभरणं२ श्रीवत्सांकित-वक्षा २ लंबितवनमालं ॥ भूपितबाहोर्युगलं कर-तलधृतवेणुं २ त्रिवलीशोभितमुदरं २ नवजल-धरनीलं जयदेव ॥ ५ ॥ मुरलीवाद्यं लीला सप्त-स्वरगीतं२स्थलचर जलचर वनचर २रंजितम्गीतम्॥

१ सतपंकज ।

स्थंभितयमुनातोयं अगणित तवचरितं २ ॥
गोपीजनमनमोहन २ त्वं श्रीकान्तं जयदेव २॥६॥
रासक्रीडामंडित वेष्टित व्रजललनं २ मध्ये तांडव
संगित २ कोमलदलनयनं २ कुसुमाकारितरंजित मन्द
स्मितवदनं २ कालियफणिवरदमनं २ यज्ञेश्वर गमनं
जयदेव २ ॥ ७ ॥ अभिनवनीताहारं करतल
दधिगोलं २ लीलानटवरखेलं २ धृतकांचनशैलं ॥
निजजनरक्षाशीलं विदलित रिपुदलनं २ भगवन्तं
परिपालं २ वंदे गोपालं जयदेव २ ॥ ८ ॥ किंकाणि
मेखलमध्ये पीताम्बरवसनं २ तोडरनूपुर गञ्जित २



१ कारं ।

विलासित पदयुगलं गोगोपीपरिवेष्टित यमुनातट
संस्थं २ व्यासाभयदं सुखदं २ भुवनत्रयपालं जयदेव
२ ॥ ९ ॥ वंदे गोपालं २ मृगमदशोभितभालं २
करुणाकल्लोलं जयदेव जयदेव ॥ १० ॥

## अथ शिव आरती प्रारम्भः ।

जय गंगाधर हर जय गिरिजाधीशा शिव २ त्वं मां
पालय नित्यं २ कृपया जगदीशा हर हर हर महादेव॥१
कैलासे गिरिशिखरे कल्पद्रुमविपिने शिव २ गुंजति
मधुकर पुंजे २ कुञ्जवने गहने॥कोकिल कूजित खेलत
हंसावन ललिता शिव २॥ रचयाति कला कलापं २

नृत्यति मुदसहिता, हर ३ ॥ २ ॥ तस्मिन्सुललित-
देशे शालाः मणिरचिता, शिव २॥ तन्मध्ये हर निकटे
२ गौरीमुदसहिता ॥ क्रीडां रचयति भूषा रंजित
निजमीशं, शिव २ इन्द्रादिकसुरसेवित २ नामयते
शीशं हर ३ ॥ ३ ॥ विबुधवधूर्बहु नृत्यति हृदये
मुदसहिता, शिव २ ॥ किन्नरगायनं कुरुते २, सप्त-
स्वरसहिता, हर ३ ॥ ४॥ धिननं कथयिक धिननं
मृदंग वादयते, शिव २ ॥ क्वणु क्वणु ललितावेणुं २
मधुरं नादयते, हर ३ ॥ ५ ॥ रुणरुण चरणैः रच-
यति नूपुरमुज्ज्वलितम्, शिव २ ॥ चक्रावर्त्ते भ्रम-



यति २ कुरुते तां धिक्तां, तां तां लुप चुप तां तां
तालं वाजयते, शिव २ ॥ अंगुष्ठांगुलिनादं २ ला-
सक्तां कुरुते, हर २ ॥ ६ ॥ कर्पूरद्युतिगौरं पंचा-
ननसहितं, शिव २ त्रिनयन शशिधरमौले २ विष-
धरकण्ठयुतं, सुन्दरजटाकलापं पावकयुतभालं,
शिव २॥ डमरुत्रिशूलपिनाकं २ करधृत नृकपालं,
हर ३ ॥ ७ ॥ रुंडरचित उरमाला पन्नगनुपवीतं,
शिव २॥ वामविभागे गिरिजा २ रूपं अतिल-
लितं॥सकलशरीरे मनसिजकृत भस्माभरणं, शिव २
इति वृषभध्वजरूपं २ तापत्रयहरणं, हर ३ महा-

शि॰ देव ॥ ८ ॥ शंखनिनादं कृत्वा भल्लरि नादयते, शि० ५०
॥४३॥ शिव २॥ नीराजयते ब्रह्मा वेदऋचं पठते॥ अति-
मृदुचरणसरोजं हृतकमले धृत्वा, शिव २ ॥ अव-
लोकयति महेशं २ शम्भुं अभिनत्वा हर ३ ॥ ९ ॥
ध्यानं आरतिसमये हृदये इति कृत्वा, शिव २॥ रामं
त्रिजटानाथं २ ईशं अभिनत्वा, हर ३ ॥ १० ॥
संगतिवेणा प्रतिदिनपठनं यः कुरुते, शिव २ शिव-
सायुज्यं गच्छति २ भक्त्या यः शृणुते, हर ३ ॥११॥
जय गंगाधर हर जय गिरिजाधीशा, शिव २ ॥ त्वं
मां पालय नित्यं २ कृपया जगदीशा,ॐ हर हर ॥४३॥

हर महादेव ॥ १२ ॥ इति शिवआरती समाप्त ॥

( स्तुतिः )

ॐ भजे शिवं शिवापतिं शचीपतिं च शंकरम् ।
निशापतिं सुभालकं नमामि भक्तिपालकम् ॥ १ ॥
निरञ्जनं गुणाकरं प्रकृत्यकृत्यसुन्दरम् ।
अकृत्यकृत्यजालकं नमामि भक्तिपालकम् ॥ २ ॥
कपालमालसुन्दरं उमापतिं दिगम्बरम् ।
सुकार्तिकेयलालकं नमामि भक्तिपालकम् ॥ ३ ॥
सुनागराजभूषणं प्रजापतीयदूषणम् ।
समोहमालजालकं नमामि भक्तिपालकम् ॥ ४ ॥

नि० सुरेश गंगधारणं रकारनाम कारणम् ।
॥४४॥ त्रिपुरारिमन्तकालकं नमामि भक्तिपालकम् ॥ ५ ॥ प्र०प०
यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत् ।
तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥
यस्यस्मृत्या० ॥ कायेनवाचा० ॥ श्रीरस्तु ॥

इति शुभम् ।

(यजमानो ब्राह्मणाशिषो गृह्णीयात्)

आशीर्वादमंत्राः ।

हरिः—ॐ पृथिव्याऽअहमुदन्तरिक्षमारुहमन्तरिक्षा-
द्दिवमारुहम्॥ दिवोना कस्य पृष्ठात्स्वर्ज्ज्योतिरगा- ॥४४॥

महम्॥१॥ स्वर्य्यन्तो ना पेक्षन्तऽआद्या ँ रोहन्ति
रोदिस ॥ यज्ञं य्ये व्विश्वतो धार ँ सुव्विद्वा ँ
सोव्वितेनिरे ॥२॥ अग्नेप्प्रे ह्हिप्प्रथमो देवयताञ्च-
क्षुर्द्देवानामुतमर्त्यानाम्॥ इयक्षमाणाम्भृगुभिःसजोषाः
स्वर्य्यन्तु यजमानाः स्वस्ति ॥ ३ ॥ बाधामेऽअस्य
व्वचसोयविष्टम ँ हिष्ठस्य प्प्रभृतस्य स्वधावः ॥
पीयातित्वोऽअनुत्वा गृणातिव्वन्दारुष्टे तन्न्वं वन्देऽ
अग्ने॥४॥ सब्बोधिसूरिर्म्मघवा व्वसुपते व्वसुदा-
वन्॥ युयोद्ध्यस्मद्द्वेषाछ्ठसि विश्वकर्म्मणे स्वाहा ॥५॥
पुनस्त्वाऽदित्या रुद्रा व्वसवः सामिन्धताम्पुनर्ब्रह्मणो

व्वसुनीथयज्ञैः॥ घृतेनत्वन्तन्न्वं व्वर्द्धयस्व सत्याःसन्तु यजमानस्य कामाः ॥६ ॥ यथेमां व्वाचङ्कल्याणी मा वदानि जनेभ्यः॥ब्रह्मराजन्न्याभ्या ँ शूद्राय चार्य्याय च स्वाय चारणाय च ॥ प्रियो देवानान्दक्षिणायै दातुरिहभूयासमयम्मे कामःसमृद्ध्यतामुपमादो नमतु॥ स्वस्ति नऽइन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषा-व्विश्ववेदाः॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्ति नो बृहस्पतिर्द्धधातु॥८॥शतं भवति शतयुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते ॥९ ॥ (ब्राह्मणमंत्रः) श्रीवर्चस्वमायुष्यमारोग्यमाविधात्प-



वमानं महीयते॥ धान्यं धनं पशुपुत्रलाभंशतसं-वत्सरं दीर्घमायुः ॥ १५ ॥ मंत्रार्थाःसफलाः सन्तु पूर्णाः सन्तु मनोरथाः ॥शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः॥ब्रह्मवाक्यास्थिता नित्यं निघ्नन्तु तव शात्रवान्। आशिका विप्रहस्तेषु नित्यं वन्दन्ति ये नराः ॥ चत्वारो वर्द्धते लक्ष्मीरायुः कीर्तिर्यशो बलम्॥ धनवान् पुत्रवान् लक्ष्मीवान् आयुष्मान् सकलसमृद्धिमान् भव(यजमानो ब्रूयात्) तथाऽस्तु इत्याशीर्वादः। इति शुभम्॥

मया भवन्नियोगेन जपपाठादिकं कृतम् ॥
तदुत्पन्नं तु यच्छ्रेयस्तत्तुभ्यं प्रददाम्यहम् ॥१॥

( दक्षिणा विचारः )

ब्रह्मवैवर्ते- यज्ञो दक्षिणया सार्द्धं पुत्रेण च फलेन च ॥ कर्मिणां फलदाता चेत्येवं वेदविदो विदुः ॥ १॥ कृत्वा कर्म च तस्यैव तूर्णं दद्याच्च दक्षिणाम् ॥ तत्कर्म फलमाप्नोति वेदैरुक्तमिदं मुने ॥ २॥

जपान्ते दक्षिणां विलम्बाद्ददाति तस्य फलमाह ॥ मुहूर्ते समतीते तु भवेच्छतगुणा च सा । त्रिरात्रे



नोट—सर्वास्तमन्त्रार्थाः सफलाः सन्तु आराध्यदेवताः सुप्रसन्ना वरदा भवन्तु । इच्छितमनकामनासंसिद्धिरस्तु ॥ (यजमानो ब्रूयात्) तथाऽस्तु ॥ इति ॥

तद्दश गुणा सप्ताहे द्विगुणा ततः ॥ मासे लक्ष गुणा प्रोक्ता ब्राह्मणानां च वर्द्धते । संवत्सरव्यतीते तु सा त्रिकोटि गुणा भवेत् ॥ कर्म्म तद्यजमानानां सर्वं च निष्फलं भवेत् । स ब्रह्मस्वापहारी च न कर्मार्होऽशुचिर्नरः ॥

इति शुभम् ।

श्रीगणेशायनमः ॥ अथ क्षत्रि गायत्री प्रा० ॥ ॐ ता छं सवितुरिति कृण्वऋषिः त्रिष्टुप्छंदः सवितादेवता ऐं बीजं क्लीं शक्तिः सौं कीलकं मम सकलपापक्षयार्थे जपे विनियोगः ॥ अथ ऋष्यादि न्यासः ॥ ॐ कृण्व ऋषये नमः शिरसि ॥ त्रिष्टुप्छं-

दसेनमः मुख ॥ सविता देवतायै नमो हृदये ॥ ऐँ 
बीजाय नमः गुह्ये ॥ क्लीं शक्तये नमः पादयोः ॥
सौं कीलकाय नमः सर्वांगे ॥ अथ करन्यासः ॥ ॐ
ता छं सवितुर्व्वरेण्यस्य अंगुष्ठा० ॥ चित्रामाहं वृणे
तर्जनी० ॥ सुमतिं विश्व जन्याम् मध्यमा० ॥ या-
मस्यकण्वोऽअदुहत् अनामिका० ॥ प्रपीना छं
सहस्रधारां कनिष्ठिका० ॥ पयसा महीङ्गाम् कर-
तल कर० ॥ एवं हृदयादि न्यासः ॥ अथध्यानम्
मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैः ।
युक्तामिन्दुनिवद्धरत्नमुकुटां तत्वात्मवर्णात्मिकाम् ॥ 

मम सकलपापक्षयार्थं अष्टोत्तरशतसंख्याकं गायत्रीजपमहं करिष्ये ॥

गायत्रीं वरदाभयां कुशगदां पात्रं कपालं शिरः ।
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ १॥
इति ध्यात्वा । मानसोपचारैः सम्पूज्य॥ अथ मंत्रः
ता छं सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं
व्विश्वजन्न्याम् ॥ यामस्य कण्वोऽअदुहत्प्रपीना छं
सहस्रधाराम्पयसा महीङ्गाम् ॥ १। इति जपः
१०८--२८--१०--पुनः न्यासं--ध्यानम्--जपंनिवेद्य॥
मया कृतेन अष्टोत्तरशतसंख्याकं क्षत्रिगायत्रिमंत्र-
जपकृतेन श्रीभगवान् ब्रह्मस्वरूपी सविता देवता
प्रीयतां न मम । इति क्षत्रि गायात्रि ॥

अथ विष्णोर्द्वादशाक्षरमंत्र प्रयोगः ।

ॐ अस्य श्रीद्वादशाक्षरमंत्रस्य प्रजापति ऋषिः गायत्री छंदः वासुदेवो देवता मम धर्मार्थकाममोक्षार्थे जप विनियोगः । अथ ऋष्यादिन्यासः॥ ॐ प्रजापति ऋषये नमः शिरसि । ॐ गायत्रीछंदसे नमः मुखे । ॐ वासुदेव देवतायै नमः हृदये । ॐ विनियोगाय नमः सर्वांगे । अथ करन्यासः । ॐ ॐ अंगुष्ठाभ्यां नमः । ओं नमो तर्जनी० । ॐ भगवते मध्यमा० । ओं वासुदेवाय अनामिका० । ॐ नमो भगवते वासुदेवाय कनिष्ठिका० । एवं



हृदयादिन्यासः ॥ ॐ ॐ हृदयाय० ॥ ॐ नमो शिरसे० ॥ ॐ भगवते शिखायै० ॥ ॐ वासुदेवाय कवचा० ॥ ॐ नमो भगवते वासुदेवाय अस्त्रायफट्॥ अथ मंत्रवर्णन्यासः ॥ ओं नमः मूर्ध्नि १ ओं नं नमः ललाटे२ओं मों नमः नेत्रयोः ३ ओं भं नमः मुखे४ओं गं नमः गले५ ओं वं नमः बाह्वोः ६ ओं तें नमः हृदये७ ओं वां नमः कुक्षौ८ओं सु नमः नाभौ ९ ओं दें नमः लिंगे १०ओं वां नमः जानुनोः ११ ओं यं नमः पादयोः १२॥अथ मूर्तिपंजरन्यासः ॥ ॐ अं केशवाय धात्रेनमः ललाटे१ओं नं आं नारा-

१२० यणाय अर्यम्णेनमः कुक्षौ २ ओं मां इं माधवाय प्र०१०
मित्रायनमः हृदि ३ ओं भं ईं गोविंदाय वरुणाय
नमः कंठे ४ ओं गं उं विष्णवे अंशवे नमः कंठ दक्ष-
पार्श्वे ५ ओं थं ऊं मधुसूदनाय भगायनमः दक्षि-
णांसे ६ ओं तें एं त्रिविक्रमाय विवस्वते नमः दक्ष-
गले ७ ओं वां ऐं वामनाय मित्रायनमः कंठवाम-
पार्श्वे ८ ओं सु ओं श्रीधराय पूष्णेनमः वामांसे ९
ओं दें औं हृषीकेशाय पर्जन्यायनमः वामगले १०
ओं वां अं पद्मनाभाय त्वष्ट्रेनमः पृष्ठे ११ ओं यं
अः दामोदराय विष्णवे नमः ककुदि १२ ओं नमो ।।६९।

भगवते वासुदेवायनमः शिरसि १३ ओं किरीटके-
यूरहारमकरकुंडलधर शंखचक्रगदांभोजपीतांबर
धर श्रीधर श्रीवत्सांकितवक्षःस्थल श्रीभूमिसहित
आत्मज्योतिर्द्वय दीप्तकराय सहस्रादित्यतेजसे
नमः इति मंत्रेण व्यापकं कुर्यात् ॥ अथ ध्यानम् ॥
विष्णुं शारदचंद्रकोटिसदृशं शंखं रथांगं गदा-
मंभोजं दधतं सिताब्जनिलयं कांत्या जगन्मोहनम्।
आबद्धांगदहारकुंडलमहामौलिं स्फुरत्कंकणं,
श्रीवत्सांकमुदारकौस्तुभधरं वन्दे मुनीन्द्रैःस्तुतम्॥१॥
इति ध्यात्वा ॥ मानसोपचारैः सम्पूज्य ॥ मूलमंत्रः

"ओं नमो भगवते वासुदेवाय" जपांते पुनः न्यासं ध्यानं प्रार्थना अनेन यथासंख्यककृत द्वादशाक्षर मंत्रजपेन श्रीविष्णुः प्रीयताम् ॥ अस्य पुरश्चरणं द्वादशलक्षात्मकम्॥जपान्ते आज्यप्लुतैस्तिलैः पायसेन क्षीरद्रुमसमिद्भिश्च जपाद्दशांशेन होमः । तद्दशांश तर्पणम् । तद्दशांश मार्ज्जनम् । तद्दशांश ब्राह्मण-भोजनम् ॥

---

शारदातिलके । वर्णलक्षं जपेन्मंत्रं दीक्षितो विजितेंद्रियः ॥ तत्सहस्रं प्रजुहुयात्तिलैराज्यपरिप्लुतैः ॥ एवं संपूजितो विष्णुः भवद्यादिष्टमात्मनः ॥ पायसेन घृताक्तेन मंत्रवर्णसहस्रकम् ॥२॥ जुहुयान्मानवः सिद्ध्यै समिद्भिः क्षीरिभूरुहाम् ॥ तत्संख्यया पयोक्ताभिः सर्वपापविमुक्तये ॥ ३ ॥



## * अथ सरस्वती दशाक्षर मंत्र प्रयोगः *

अथ सरस्वतीदशाक्षरिमंत्रस्य कण्वऋषिः विराट्छन्दःवाग्देवता विद्याप्राप्त्यर्थेजपेविनियोगः॥ ओं कण्वऋषये नमः शिरसि ॥ ओं विराट्छंदसे नमः मुखे ॥ ओं वागीश्वरी सरस्वती देवतायै नमः हृदि॥ इति ऋष्यादिन्यासः॥ अथ अक्षरंन्यासः॥ ओं वं नमः शिरसि। ओं दं नमः दक्षश्रवणे। ओं वं नमः वामश्रवणे। ओं दं नमः दक्षिणनेत्रे। ओं वां नमः वामनेत्रे। ओं ग्वां नमः दक्षिणनासायाम् । ओं दिं नमः वामनासायाम्। ओं नीं नमः मुखे।

 


ओं स्त्रां नमः लिंगे । ओं ह्रां नमो गुदे ॥ १०॥
अथ करन्यासः ॥ ओं अं कं खं गं घं ङं आं
अंगुष्ठा० ॥ ओं इं चं छं जं झं ञं ईं तर्जनीं० ॥ ओं
उं टं ठं डं ढं णं ऊं मध्यमा० ॥ ओं एं तं थं दं धं नं ऐं
अनामिका० ॥ ॐ ओं पं फं बं भं मं औं कनिष्ठिका०॥
ओं अं यं रं लं वं अः करतल० ॥ एवं हृदयादिन्यासः
ध्यानम् ॥ तरुणशकलमिन्दोर्बिभ्रती शुभ्रकांतिः,
कुचभरनमितांगी सन्निषण्णासिताब्जे ॥ निजकर-
कमलोद्यल्लेखनीपुस्तकश्रीः, सकलविभवसिद्ध्यै
पातु वाग्देवता नः ॥१॥ इति ध्यात्वा मानसोपचारैः



संपूज्यः ॥ मंत्रः "ओं वदवदवाग्वादिनि स्वाहा" इति
दशाक्षरो मंत्रः ॥ अस्य पुरश्चरणं दशलक्षजपः इति
शारदातिलके सरस्वतिमंत्रप्रयोगः ॥

### ❋ अथ लक्ष्मीसूक्तम् ❋

आचम्य प्राणानायम्य ॥ गणपतिस्मरणं ॥
अद्यपूर्वो० मम अनंता व्यवछिन्नशाश्वतलक्ष्मी-
प्राप्तिद्वारा सुखसंपदायुरारोग्यैश्वर्याभिवृद्ध्यर्थं
श्रीमहालक्ष्मीप्रीत्यर्थं च अमुक संख्यया श्रीसूक्त
जपमहं करिष्ये ॥ ओं अस्य श्रीहिरण्यवर्णमित्या-
दिपंचदशर्चस्य श्रीसूक्तस्य आनन्दकर्दमचिक्लीतें-

दिरासुता ऋषयः आद्यानां तिसृणामनुष्टुप्छन्दः चतुर्थ्याः प्रस्तारपंक्तिश्छंदः पंचमी षष्ठ्योस्त्रिष्टुप्छंदः ततोष्टानामनुष्टुप्छंदः अन्त्यायाः प्रस्तारपंक्तिश्छंदः श्रीविश्वावसुर्देवता स्थिरलक्ष्मीप्राप्तये न्यासे जपे विनियोगः ॥ ओं आनंदकर्दम चिक्लीतेंदिरासुता ऋषिभ्यो नमः शिरसि ॥ ओं अनुष्टुप्प्रस्तार पंक्ति त्रिष्टुबनुष्टुप् प्रस्तारपंक्तिच्छन्दोभ्यो नमः मुखे। ओं विश्वावसुदेवताभ्यो नमः हृदये॥ इतिऋष्यादिन्यासः अथ श्रीसूक्तन्यासः *ध्यानम् ॥या सा पद्मासनस्था

*ॐ हिरण्यवर्णां हरिणीम्. इति शिरसि १ नेत्रयोः २ कर्णयोः ३ नासिकयोः ४ मुखे ५ गले ६ बाह्वोः ७ हृदि ८ नाभौ ९ गुह्ये १० गुदे ११ ऊर्वोः १२ जान्वोः १३ जंघयोः १४ पादयोः १५ इति न्यासम् ध्यानम् ॥

विपुलकटितटी पद्मपत्रायताक्षी, गंभीरावर्तनाभि स्तनभरनमिता शुभ्रवस्त्रोत्तरीया॥ या लक्ष्मीर्दिव्य-रूपैर्मणिगणखचितैः स्नापिता हेमकुंभैः, सा नित्यं पद्महस्ता मम वसतु गृहे सर्वमांगल्ययुक्ता ॥ १ ॥ इति ध्यात्वा मानसोपचारैः सम्पूज्य श्रीसूक्तं पठेत् ॥ ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह॥ १ ॥ तांम आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विंदेयं गामश्वं पुरुषानहम् ॥ २ ॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् ॥ श्रियं

१ अश्वपूर्णां इत्यपपाठः

देवीमुपह्वये श्रीर्मादेवीर्जुषताम् ॥ ३॥ कांसोस्मि- सू० १०
तां हिरण्यप्राकारामार्द्रां ज्वलंतीं तृप्तां तर्प्पयंतीम्॥
पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥
चंद्रां प्रभासां यशसा ज्वलंतीं श्रियं लोके देवजुष्टा-
मुदाराम् ॥ तां पद्मनेमीं शरणमहं प्रपद्येऽअलक्ष्मी-
र्मे नश्यतां त्वां वृणोमि ॥ ५ ॥ आदित्यवर्णे तप-
सोधिजातो वनस्पतिस्तववृक्षोथ बिल्वः॥तस्य फला-
नि तपसा नुदंतु मायांतरायाश्च बाह्या अलक्ष्मीः॥६॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह॥प्रादुर्भूतो ॥ ५३ ॥
सुराष्ट्रेस्मिन्कीर्ति वृद्धिं ददातु मे ॥७ ॥ क्षुत्पिपासा

मलाज्येष्टा अलक्ष्मीर्नाशयाम्यहम् ॥ अभूतिम-
समृद्धिंच सर्वां निर्णुद मे गृहात् ॥८॥ गंधद्वारां दुरा-
धर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां
तामिहोपह्वये श्रियम् ॥ ९ ॥ मनसः का ममाकू-
तिं वाचः सत्यमशीमहि ॥पशूनां रूपमन्नस्य मयि
श्रीः श्रयतां यशः ॥ १० ॥ कर्दमेन प्रजाभूता मयि
संभव कर्दम ॥ श्रियं वा सयमे कुले मातरं पद्ममा-
लिनीम् ॥११॥ आपः स्रजंतु स्निग्धानि चिक्ली-
तवसमे गृहे॥निचदेवीं मातरं श्रियं वा सयमेकुले १२
आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम्॥सूर्यां

हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ १३॥ आ-
र्द्रां यष्करिणीं यष्टिं पिङ्गलां पद्ममालिनीम् ॥
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥१४॥
तांमऽआवह जातवेदो लक्ष्मीमनपगामिनीम् ॥
यस्यां हिरण्यं प्रभूतिं गावोदास्योश्वान् विंदेयं
पुरुषानहम् ॥ १५ ॥ यः शुचिः प्रयतो भूत्वा
जुहुयादाज्यमन्वहम् ॥ श्रियः पंचदशर्चंञ्च श्रीकामः
सततं जपेत् ॥ १६ ॥

इति श्रीसूक्तम् ॥

भगवतीं प्रार्थयेत् ॥ सरसिजनिलये सरोजहस्ते



धवलतरां शुभगंधमाल्यशोभे ॥ भगवति हरिवल्लभे
मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ १॥धन-
मग्निर्धनं वायुर्धनं सूर्यो धनं वसुः॥धनमिंद्रो वृहस्प-
तिर्वरुणं धनमश्विनौ ॥२॥ वैनतेयः सोमं पिब सोमं
पिबतु वृत्रहा ॥सोमं धनस्य सोमिनो मह्यं ददातु सो-
मिनः ॥३॥ न क्रोधो न च मात्सर्यं न लोभो नाशुभा
मतिः ॥ भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं ज-
पेत् ॥ ४ ॥ पद्मानने पद्मउरू पद्माक्षी पद्मसंभवे ॥
तन्मे भजासि पद्माक्षि येन सौख्यं लभाम्यहम् ॥ ५ ॥

---

१ अश्वदायै गोदायै धनदायै महाधने ॥ धनं मे लभतां देवि सर्वकामांश्च देहिमे ॥ १ ॥ इति ऋग्वेदे विशेषः ।

नि० विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ॥ प्र०१०
॥९५॥ विष्णुप्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥ ६ ॥
महालक्ष्म्यै च विद्महे विष्णुपत्न्यै च धीमहि ॥तन्नो
लक्ष्मीः प्रचोदयात् ॥ ७ ॥
पद्मानने पद्मिनि पद्मपत्रे पद्मप्रिये पद्मदलायताक्षि॥
विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं मयि सन्नि-
धत्स्व ॥ ८ ॥ आनंदः कर्दमः श्रीदश्चिक्लीत इति
विश्रुताः ॥ ऋषयः श्रियपुत्राश्च मयि श्रीर्देवि देवता
॥ ९ ॥ ऋणरोगादिदारिद्र्यं पापञ्च अपमृत्यवः ॥
भयशोकमनस्तापा नश्यंतु मम सर्वदा ॥ १० ॥ ॥५५॥

श्रीवर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महा-
यते ॥ धनंधान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घ-
मायुः ॥ ११ ॥ इति प्रार्थना ॥इतिश्रीसूक्तं समाप्तं
आथर्वणोक्तं ॥

अथ शुक्ल यजुर्वेदोक्त अष्टाध्याय रुद्रपाठ
नाम मंत्राः ॥

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीरुद्राध्याय प्रश्न
महामंत्रस्य अघोर ऋषिः अमृतानुष्टुप्छन्दः श्री
संकर्षणमूर्ति स्वरूपा यो सावादित्यः सएष रुद्रो
देवता नमस्ते रुद्र इति बीजं नमः शिवाय इति

शक्तिः शिवतराय इति कीलकं रुद्राध्याय प्रश्न
महामंत्रजपे विनियोगः ॥ अथ ऋष्यादि
न्यासः ॥ ॐ अघोर ऋषयेनमः शिरसि। अमृता-
नुष्टुप्छंदसे नमः मुखे। श्रीसंकर्षणमूर्ति स्वरूपोयो
सावादित्यः सएष रुद्रो देवतायै नमः हृदये ।नम-
स्ते रुद्र इति बीजाय नमः नाभौ ।नमः शिवाय
इति शक्त्यै नमः गुह्ये । शिवतराय इति कीलकाय
नमः पादयोः । विनियोगाय नमः सर्वांगे ॥
करन्यासः ॥ ॐ अग्निहोत्रात्मने अंगुष्ठा० ॥ 
दर्शपौर्णमासात्मने तर्जनी० ॥ चातुर्मासात्मने

मध्यमा० ॥ ज्योतिष्टात्मने अनामिका० ॥ निरूढं
पशुबंधात्मने कनिष्ठिका०॥सर्व कर्त्तात्मने करतल०॥
एवं हृदयादिन्यासः ॥ ध्यानम् ॥ ॐ आपातालन-
भस्तलां त्रिभुवनं ब्रह्माण्डमाविस्फुरत् ज्ज्योति-
स्फाटिकलिङ्गमौलिविलसत्पूर्णेन्दुराका मृतैः ॥
अस्ताकाप्लुतमेकमेवमनिशं रुद्रानुवाकान् पठन्
ध्यायेदीप्सितसिद्धये धृतपदं विप्रोभिशं चेच्छिवं
॥ १ ॥ ब्रह्माण्डं व्याप्तदेहा यमभसितरुचा भास-
माना भुजंगैः कंठे काला कपर्दा किरिटिनि रुचिरा
च्छंदको दंड हस्ता ॥त्र्यक्षा रुद्राक्षमाला प्रकटित

विभवा शांभवा मूर्तिभेदा रुद्रा श्रीरुद्रसूक्तं प्रक-
टित विभवा नः प्रयच्छन्तु सौख्यम् ॥ २ ॥

प्रणवं प्राक् प्रयुंजीत व्याहृतिस्तदनन्तरम् ।
सावित्रीं चानुपूर्वेण ततो वेदान्समारभेत् ॥१॥

ॐ भूर्भुवः स्वः ॐ तत्सवितु० त् ॐ वा सप्तव्याहृति
संयुक्तेन ॥

---

| | | | |
|---|---|---|---|
| हरिः ओ३म् | ९ यत्प्रज्ञानम् | ५ ततो विराड् | १४ यत्पुरुषेण |
| १ माच्छन्दः | १० येनेदम | ६ तस्माद्यज्ञात् | १५ सप्तास्यासन् |
| २ पृथिवी छन्दः | ११ यस्मिन्नृचः | ७ तस्माद्यज्ञात् | १६ यज्ञेनयज्ञम् |
| ३ गणानान्त्वा | १२ सुषारथिरश्वा | ८ तस्माद्श्वा | १७ अद्भ्य-सम्भृतः |
| ४ गायत्रीत्रिष्टुप् | प्रथमोऽध्यायः | ९ तं यज्ञम् | १८ वेदाहम् |
| ५ द्विपदाया | १ सहस्रशीर्षाः | १० यत्पुरुषम् | १९ प्रजापतिश्चरति |
| ६ सहस्तोमाः | २ पुरुषऽएवेदम् | ११ ब्राह्मणोस्य | २० योदेवेभ्यऽआ |
| ७ यज्जाग्रतः | ३ एतावानस्य | १२ चंद्रमामनसः | २१ रुचम्ब्राह्मम् |
| ८ येन कर्म्माणि० | ४ त्रिपादूर्द्धः | १३ नाभ्याऽआसीदं | २२ श्रीश्चते |

| | | | |
|---|---|---|---|
| द्वितीयोऽध्यायः | ११ अस्माकमिन्द्रः | ३ येनापावक | १३ बण्महाँऽअसि |
| १ आशुः शिशानः | १२ अमीषाञ्चित्तम् | ४ दैव्यावध्वर्य्यू | १४ बट्सूर्य्यस्य |
| २ सङ्क्रन्दनेना | १३ अवसृष्टापरा | ५ तम्प्रत्नथा | १५ श्रायन्त |
| ३ सऽइषुहस्तैः | १४ प्रेता जयता | ६ अयम्वेनः | १६ अद्यादेवा |
| ४ बृहस्पते परि | १५ असौया सेना | ७ चित्रन्देवाना | १७ आकृष्णेन |
| ५ बलविज्ञायस्थ | १६ यत्रबाणाः | ८ आनऽइडा | चतुर्थोऽध्यायः |
| ६ गोत्रभिदम् | १७ मर्म्माणि ते | ९ यदद्य कच्च | १ नमस्ते |
| ७ अभिगोत्राणि | तृतीयोऽध्यायः | १० तरणिर्विश्व | २ यातेरुद्र |
| ८ इन्द्रऽआसान् | १ विभ्राड्बृहत् | ११ तत्सूर्य्यस्य | ३ यामिषुम् |
| ९ इन्द्रस्य वृष्णः | २ उदुत्यम् | १२ तन्मित्रस्य | ४ शिवेनवचसा |
| १० उद्धर्षय | | | |

॥१॥

| | | | |
|---|---|---|---|
| ५ अध्यवोचत् | १५ मानोमहान्तः | २५ नमो गणेभ्यः | ३५ नमो बिल्मिने |
| ६ असौयस्ताम्रः | १६ मानस्तोके | २६ नमः सेनाभ्यः | ३६ नमो धृष्णवे |
| ७ असौयो | १७ नमोहिरण्यबा | २७ नमस्तक्षभ्यः | ३७ नमः स्रुत्याय |
| ८ नमोस्तुनी | १८ नमोबभ्लुशाय | २८ नमः श्वभ्यः | ३८ नमः कूप्याय |
| ९ प्रमुञ्च | १९ नमो रोहिताय | २९ नमः कपर्दिने | ३९ नमोवार्याय |
| १० विज्ज्यन्धनुः | २० नमः कृत्स्नाय | ३० नमो ह्रस्वाय | ४० नमः शङ्गवे |
| ११ यातेहेति | २१ नमोवञ्चते | ३१ नमऽआशवे | ४१ नमः शम्भवाय |
| १२ परितेधन्वनो | २२ नमऽउष्णीषिणे | ३२ नमोज्ज्येष्ठाय | ४२ नमः पार्याय |
| १३ अवतत्यधनु | २३ नमोविसृजद्भ्य | ३३ नमः सोभ्याय | ४३ नमः सिकत्याय |
| १४ नमस्तऽआ | २४ नमः सभाभ्यः | ३४ नमोवन्न्याय | ४४ नमो व्रज्याय |

॥१॥

४५ नमः शुष्क्याय
४६ नमः पर्णाय
४७ द्रापेऽअन्धसः
४८ इमारुद्राय
४९ यातेरुद्र
५० परिनो
५१ मीढुष्ट
५२ विकिरुद्र
५३ सहस्राणि
५४ असंख्याता
५५ अस्मिन्महत्य

५६ नीलग्रीवाः
५७ नीलग्रीवाः
५८ येव्वृक्षेषु
५९ येभूतानाम्
६० येपथाम्
६१ येतीर्थानि
६२ येन्नेषु
६३ यऽएतावन्तः
६४ नमोऽस्तुरुद्रे
६५ नमोऽस्तु
६६ नमोऽस्तु

पंचमोऽध्यायः

१ नमस्ते
२ यातेरुद्र
३ यामिषुम्
४ शिवेनव्वचसा
५ अध्यवोचत्
६ असौयस्ताम्रः
७ असौयो
८ नमोस्तु
९ प्रमुञ्च
१० विज्ज्यन्धनुः
११ यातेहेति

१२ परिते
१३ अवतत्यधनुः
१४ नमस्तऽआ
१५ मानोमहान्
१६ मानस्तोके

१ एषतेरुद्रभागः
२ अवरुद्रम्
३ नमस्ते
४ याते
५ नतस्त्विदा

॥१॥